तदधस्ताच्च सगदे सगदासन्धिरेव च ।
सगदान्तरकश्चेति चाक्षिकूटौ तयोरधः ॥ २७८ ॥

भ्रुवोस्स्थाने तयोस्तद्वत्तदधोदयनान्तर ।
उभे स्यातामधस्तात्तु नेत्रप्रस्तावसञ्ज्ञकौ ॥ २७९ ॥

नेत्रयोर्मण्डलानि स्युः पक्ष्मकर्म तथा स्मृतम् ।
दृष्टिः सितासिते तद्वत्पञ्चधा संप्रकीर्त्तिता ॥ २८० ॥

तेषां षट्सन्धयः प्रोक्ता एते देशाश्च चक्षुषः ।
कर्णपिप्पलिके कर्णचूलिके च ततः परम् ॥ २८१ ॥

ततः कर्णश्रोतसी च तत्पार्श्वे कर्णसन्धिकौ ।
तयोरधः कर्णपाल्यौ कर्णपाल्योस्तथोपरि ॥ २८२ ॥

उद्ध तौ तु तदुपरि मध्यकर्णाबलत्तरम् ।
पाक्कर्णौ च बहि कर्णौ तयोरभ्यन्तराश्रितौ ॥ २८३ ॥

स्यातां वितर्दिके चाधः पार्श्वयोश्च तयोः पुनः ।
स्मृतावन्तरकर्णौ च कर्णदेशाः प्रकीर्त्तिताः ॥ २८४ ॥

ग्रीवा तत्सन्धिपृष्ठौ च गलश्च तदनन्तरम् ।
अथ मन्ये पार्श्वयोश्च मन्यभागौ तथा तयोः ।
पार्श्वयोः पिण्डिके ज्ञेये तदुरस्तदुपर्यपि ॥ २८५ ॥

तस्योपरि गुह्यभागौ समुद्रौ तदुपर्यपि ।
तदुपर्यग्रतः स्यातां यत्तु स्थाने च पार्श्वतः ॥ २८६ ॥

पार्ष्णिघातौ तदुपरि ज्ञेयावुत्सङ्गसंज्ञकौ ।
स्कन्दस्तदुपरिस्कन्दमध्ये पणवकः स्मृतः ॥ २८७ ॥

ग्रीवाप्रदेशा गदिता एते तु गजशा(ब)के ।
असौ ततः प्रतीकाशौ ताभ्यां प्रत्यङ्गसंज्ञकौ ॥ २८८ ॥

ततोऽसफलके स्यातामधस्ताच्च तयोः स्मृतौ ।
बाहू स्यातां बाहुमध्ये क्षयभागावुभौ ततः ॥ २८९ ॥

ततः पुरस्तात्स्यातां तु जवभागौ च दन्तिनः ।
स्तनौ तु गात्रयोर्मध्ये चतुरक्षान्तरं ततः ॥ २९० ॥

स्तनयोश्चूचुकौ मध्ये क्षीरकश्रोतसी तयोः ।
स्तनयोरन्तरं यत्तु स्तनान्तरमिति स्मृतम् ॥ २९१ ॥

कक्षौ तत्पार्श्वतो ज्ञेयावधस्ताद्धृदयं तयोः ।
आयामकाण्डं तत्पृष्ठे नाभिश्च तदधः स्थितः ॥ २९२ ॥

प्रदेशाः कीर्त्तिता ह्येते गजस्योदरगामिनः ।
अण्डकोशः कोशसन्धिस्तदभ्यन्तरतः स्थितः ॥ २९३ ॥

सहाभ्युहोत्थाभ्युद्वाहूस्तस्य पार्श्वद्वयोः स्थितः ।
तदग्रे ककुदं प्राहुस्तदधस्ताच्च मध्यके ।
श्रोतोऽथ कोशपार्श्वस्थौ वंक्षणावपराश्रितौ ॥ २९४ ॥

वृषणौ बहिरन्ध्रौ च दशामेहनगामिनः ।
आसनं च ततः पश्चाद्भवेद्वंशस्ततः पुनः ॥ २९५ ॥

वंशाधस्तात्पार्श्वयोस्तु तल्वले परिकीर्त्तिते ।
ततः परं वक्रवंशस्तत्पश्चात्पश्चिमासनम् ॥ २९६ ॥

ततस्त्वपरवंशोत्थत्र्यस्थि चैव ततः परम् ।
लाङ्गूलवंशो विज्ञेयः तथा तल्वलपार्श्वके ॥ २९७ ॥

पक्षसन्धिस्ततोऽधस्ताद्विशेषौ भवतस्ततः ।
तयोरधस्तादुत्सङ्गौ तदधस्ताच्च पर्वणी ।
पर्वणोर्भवतोऽधस्तात्ततस्सन्धानभागकौ ॥ २९८ ॥

तदधस्ताद्बलीपादौ तस्याधस्ताच्च कूर्मकौ ।
कूर्माधस्ताद्भवेतां तु नखकूर्मौ ततः पुनः ॥ २९९ ॥

ततश्च स्युर्दशनखास्तथा नखशिखा अपि ।
नखानामन्तराण्यष्टौ स्यातां पूर्वौ परौ नखौ ॥ ३०० ॥

बाह्यतः सनखौ प्रोक्तौ नखस्तावान्तरौ तथा ।
बहिर्नखाश्च चत्वारो नखाधस्तात्ततः स्मृतौ ॥ ३०१ ॥

नखकर्षौ ततः स्यातां तलसन्धिस्ततः परम् ।
तत्पार्श्वे राजयः प्रोक्तास्तलास्स्युः तदनन्तरम् ॥ ३०२ ॥

ततः पश्चाच्चलप्रोहौ तलप्रोहोपरिस्थितौ ।
चिक्काभागौ ततो भागसन्धी स्यातां तयोरपि ॥ ३०३ ॥

पृष्ठतोपस्करौ स्यातां ततःपादौ तयोरपि ।
स्यातामूर्ध्वे गात्रगूहे तयोरप्युपरि स्थितौ ॥ ३०४ ॥

कक्षभागौ गात्रदेशा गजशास्त्रेषु कीर्तिताः ।
ग्रीवासन्ध्याश्रितश्चान्तकर्मणि स्यादनन्तरम् ॥ ३०५ ॥

उरोमणिस्ततोऽधस्तादुरस्तत्पार्श्वयोःस्तथा ।
गजाश्रितौ च विक्षोभौ तन्मध्येऽन्तर्मणिस्तथा ॥ ३०६ ॥

उरोऽधस्ताच्चतः पक्षौ ततोऽन्तः पशुकाः स्थिताः ।
पुरस्तात्कक्षयोःस्यातां ततोऽधितलनामकौ ॥ ३०७ ॥

पृष्ठतः करिणस्स्यातामूर्ध्वे निष्कोकास्तथा(?) ।
संकाशौ च ततः कुम्भौ पार्श्वगौ पृष्ठतस्तथा ।
उत्कृष्टौ च ततोऽधस्तात्कले तत्पार्श्वयोर्गुदः ॥ ३०८ ॥

ततः करीषस्रावः स्यात् पिण्डके पार्श्वयोस्ततः ।
अभ्यन्तरे ततः स्यातां करिणो वक्रसक्थिनी ॥ ३०९ ॥

पिण्डकाधस्तु मण्डूकौ मण्डूकोरप्यधस्थितौ ।
तत्पृष्ठतस्सकुटिकौ विज्ञेयौ करिणस्तथा ॥ ३१० ॥

ततोऽभ्यन्तरषष्ठीवयावधस्ताच्च तयोः स्थितः ।
पार्ष्णिगात्रस्ततः कूर्मो नखकूर्मौ ततः परम ॥ ३११ ॥

तथा भवेन्नखशिखा नखानामन्तराणि च ।
पुरोनखौ नखस्रावौ स्यातां तद्वद्बहिर्नखौ ॥ ३१२ ॥

अन्तर्नखौ ततः स्यातां तलकर्षौ ततः परम् ।
तलसन्धिस्ततः स्यातां तत्पार्श्वे राजयोऽन्तरे ॥ ३१३ ॥

अपरान्ते चापरयोः प्रदेशाः परिकीर्त्तिताः ।
स्यादभ्यन्तरकिङ्की तु बहिर्वालश्च पृष्ठतः ॥ ३१४ ॥

तदधस्तात्पृष्ठवालः परोवालस्तथा स्मृतः ।
पुरस्तु वंशजघनात्तथा वालधिरुच्यते ॥ ३१५ ॥

विशेषमत्र हस्तिन्यां लक्षयेद्गजशास्त्रवित् ।
एकैकस्मिन् स्तने तस्याः शिराः क्षीरवहा दश ।
योनिमस्या विजानीयान्मेढ्रस्थाने च दन्तिनः ॥ ३१६ ॥

इत्येते गजदेहस्था देशाः प्रोक्ता विभागतः ।
एते सर्वे प्रदेशास्तु चिकित्सासूपयोगिनः ॥ ३१७ ॥

ब्रूमो मुखप्रदेशानां लक्षणं तु शुभाशुभम् ।
भद्रस्य सांप्रतं ब्रूमः प्रदेशेषु शुभावहम् ॥ ३१८ ॥

लक्षणं शुभमस्यापि सूचकं मानसंयुतम् ।
संपूर्णं राज्यदं भर्तु पुष्करं चतुरङ्गुळम् ॥ ३१९ ॥

सौभाग्य मांसलं कुर्यात्सुकुमारं तथार्थदम् ।
रक्तपद्मदलच्छायं तथा मृष्टान्नपानकम् ॥ ३२० ॥

संपूर्णमांसलं रक्तं सुकुमारं शुभं स्मृतम् ।
हीनं कृष्णं च कल्माषं पुष्करं न प्रशस्यते ॥ ३२१ ॥

त्र्यङ्गुलं च भवेद्धीनं हीनं पतिविनाशनम् ।
कृष्णं पातुर्वधायैव कल्माषं भर्तृरोगदम् ॥ ३२२ ॥

अतः परं शुभे ज्ञेये श्रोतसी पाटलोदरे ।
पञ्चाङ्गुलप्रमाणेन वर्तुळत्वेन चार्थदे ।
विज्ञेया करिणो नासी श्रोतस्सङ्गमनोद्गमा ॥ ३२३ ॥

अच्छिन्नरूपा शुभदा विपरीता न सा शुभा ।
मृदुलं ताम्रवर्णं च वर्त्मना चासुखप्रदम् ॥ ३२४ ॥

अतस्तद्विपरीतं यत्न शुभाय तदुच्यते ।
अङ्गुळी करिणस्तासां सुपार्श्वातिसुखप्रदा ॥ ३२५ ॥

ताम्रा सौभाग्यदा भर्तुः वृत्ता विजयकारिणी ।
सुपार्श्वा रोगदा भर्तुः दीर्घा जीवितवर्द्धनी ॥ ३२६ ॥

ह्रस्वा स्थूला विशाला च चित्रिणी श्यामलोदरा ।
वक्रा च हीनपार्श्वा च कुत्सिता करिणाऽङ्गुलि ॥ ३२७ ॥

यानसप्ताङ्गुलायामा ह्रस्वेत्यभिविशङ्किता ।
ह्रस्वा करोति नागस्य विनाशं शीघ्रमेव च ॥ ३२८ ॥

स्थूला दुर्भिक्षदा ज्ञेया विशाला या च दुःखदा ।
करोति चित्रिणी नित्यं तस्यैव तु सुखक्षयम् ॥ ३२९ ॥

कृष्णा दृष्टिविनाशाय वक्रा धनविनाशिनी ।
कुरुते हीनपार्श्वा च युद्धकाले रिपोर्जयम् ।
निर्बली दीर्घरोमा च क्रमवृत्तत्वसंयुतः ॥ ३३० ॥

अणुबिन्दुविचित्रश्च दैर्घ्यविंशशताङ्गुलः ।
बहिस्थात्पुष्करं यावदायामो वात्यपेक्षया ॥ ३३१ ॥

अरत्नीत्य[त्र]यनाहश्च हीनो हीनतरः क्रमात् ।
युक्तस्त्वनेन मानेन करः पूज्यतमो भवेत् ॥ ३३२ ॥

निर्बलीकस्तु सौभाग्यं दीर्घरोमार्थदःस्मृतः ।
कर्मवृत्तो जयं कुर्यादण्डबिन्दुयुतो धनम् ॥ ३३३ ॥

सुप्रमाणो भवेद्भर्तुः शक्त्यायुपरिवर्धनः ।
आनाहवांश्च सततं राज्यप्रीतिकरो भवेत् ॥ ३३४ ॥

करस्य कीर्त्तितं ह्येतल्लक्षणं शुभसंज्ञितम् ।
नरकं ही॰मिच्छन्ति बालधेः शास्त्रपण्डिताः ॥ ३३५ ॥

न बालधेस्समं हस्तं नास्ति दीर्घं कुशायिनीम् ।
न तनुं नातिकायं च न ऋक्षं न क्षतिभ्रताम् ॥ ३३६ ॥

नाक्रमेण कृतोच्छेदं न हीनं दशनान्तरे ।
न ह्रस्वाङ्गुलिना युक्तं नातिसंकटपुष्करम् ।
इतिदोषविनिर्मुक्तं करं शंसन्ति पण्डिताः ॥ ६३७ ॥

वालधेस्तु करो हीनः समो वा दन्तिदुःखदः ।
अतिदीर्घो भवेद्भर्तुरायुषः क्षयकारकः ॥ ३३८ ॥

तनुर्व्याधिकरो यातुरतिकाश्योऽर्थनाशनः ।
रूक्षो व्याधिव्रणी कुर्याद्यातुर्व्रणकृमिव्यथाः ॥ ३३९ ॥

प्रतिलोमेन च स्थूलो गजः स्यऽ[गजस्य]सुखनाशनः ।
असमञ्जसहीनश्च योऽसमञ्जसवर्तुलः ॥ ३४० ॥

दुःखशोकभयायासकर्ता भवति नित्यशः ।
दशनान्तरहीनश्च जायते दन्तरोगकृत् ॥ ३४१ ॥

अतः परं प्रवक्ष्यामो लक्षणं दन्तवेष्टयोः ।
दन्तमूले सुसम्बन्धौ सनटौ किञ्चिदुन्नतौ ॥ ३४२ ॥

दन्तवेष्टौ सदा भर्तुर्वृद्धिदौ परिकीर्तितौ ।
कचहीतिवतिस्थूलौ शिथिलौ विषमौ तथा(?) ॥ ३४३ ॥

दन्तवेष्टौ सदा पातुः प्रमातुश्च न संख्यदौ ।
अतः परं प्रवक्ष्यामो लक्षणं तु विषाणयोः ।
स्निग्धौ समौ सुनिष्क्रान्तौ संपूर्णौ व्रतवर्जितौ ॥ ३४४ ॥

मुकुलाग्रौ दृढौ चापि ताम्रचूडदलोपमौ ।
दक्षिणाभ्युन्नतौ किञ्चिन्मृणालकुमुदप्रभौ ॥ ३४५ ॥

दुग्धकन्दलसच्छायौ हेमचंपकपिङ्गलौ ।
मधुपिङ्गघृतच्छायौ पीयूषसदृशप्रभौ ॥ ३४६ ॥

केतकीकुसुमाभौ च मृगाङ्ककिरणप्रभौ ।
अध्यर्धारत्निमात्रौ च तदर्धानाहसंयुतौ ॥ ३४७ ॥

अमीभिर्लक्षणैर्युक्तौ दन्तौ नागस्य पूजितौ ।
स्निग्धौ धनप्रदौ प्रोक्तौ भर्तुरायुःकरौ समौ ॥ ३४८ ॥

अभिन्नौ तु सुनिष्क्रान्तौ संपूर्णौ राज्यदौ मतौ ।
निर्व्रणौ गजलाभाय मुकुलाग्रौ जयप्रदौ ॥ ३४९ ॥

दृढौ रोगविनाशाय ताम्रचूडदलोपमौ ।
रिपुनागविनाशाय कीर्त्तितौ शास्त्रपण्डितैः ॥ ३५० ॥

दक्षिणाभ्युन्नतौ भर्तुः कीर्त्तिसौभाग्यकारकौ ।
हेमचंपकसंकाशौ वस्त्राभरणदौ मतौ ।
कुरुतां मधुपिङ्गौ च निस्सपत्नं महीतलम् ॥ ३५१ ॥

पशुलाभकरौ ज्ञेयौ घृतपीयूषसन्निभौ ।
केतकीकुसुमाभौ च भर्तुर्वंशविवर्धकौ ॥ ३५२ ॥

अध्यर्धारत्निकौ दन्तौ सुतं....तजयप्रभौ ।
आनाहमानसंयुक्तौ सदा स्फीतिकरौ मतौ ॥ ३५३ ॥

इदं शुभकरं तावद्दन्तयोर्लक्षणं मतम् ।
व्यस्तता संकटत्वं च तनुता भस्मशुभ्रता ॥ ३५४ ॥

वक्रत्वं ह्रस्वता चैव धूमरत्वं च ऋक्षता ।
मृदुताधोगतित्वं च हीनता मूलबन्धयोः ॥ ३५५ ॥

प्रान्तयोःस्थूलता चैव दीर्घत्वं गतिमात्रयोः ।
सर्पच्छत्रककान्तित्वं दोषास्त्वेते भवन्ति हि ॥ ३५६ ॥

दन्तयोर्वारणानां च कथ्यते त्वशुभं फलम् ।
व्यस्तौ च संकटौ दन्तौ मदहानिकरौ मतौ ॥ ३५७ ॥

दन्तिनस्तनुतायुक्तौ व्याधिदौ परिकीर्त्तितौ ।
भस्मशुभ्रौ तथा भर्तुर्महाक्लेशकरौ मतौ ।
वक्रौ गन्धविनाशाय ह्रस्वौ च परिकीर्त्तितौ ॥ ३५८ ॥

धूमरौ ऋक्षतायुक्तौ गजस्यायुर्विनाशकौ ।
मृदुत्वयुक्तौ नागस्य शल्यव्रणकरौ मतौ ॥ ३५९ ॥

स्थूलाग्राधोगतौ चैव भर्तुर्यातुश्च दुःखदौ ।
निन्दितं लक्षणं ह्येतद्दन्तयोस्तावदीरितम् ॥ ३६० ॥

अनयोश्च समुत्पत्तिः प्रसङ्गात्कथ्यतेऽधुना ।
शूलाच्चक्राच्च वक्राच्च कालदण्डान्महेश्वरः ॥ ३६१ ॥

अङ्गमङ्गं च संगृह्य दन्तान्समसृजत्प्रभुः ।
सृष्टदन्तास्तु ते नागा बलेन महता युताः ॥ ३६२ ॥

जाता पुरि पुरद्वारकवाटादृविदारणाः ।
शूलं चन्द्राभ्रशुभ्रं स्याच्चक्रं च ज्वलनप्रभम् ॥ ३६३ ॥

वज्रं काञ्चनसंकाशं कालदण्डस्तु पिङ्गलः ।
एतेषां च समायोगे वर्णानां मधुपिङ्गता ॥ ३६४ ॥

जाता गजविषाणानामतो मधुनिभाः शुभाः ।
छायापञ्चकमेतद्धि दन्तयोस्तु शुभं मतम् ।
भद्रजातिगजे ह्येतन्न मन्दमृगदन्तयोः ॥ ३६५ ॥

घृतकुन्देन्दुपीयूषकेतकीच्छविपञ्चकम् ।
इदं जातित्रयस्यापि सामान्यं शोभनं मतम् ॥ ३६६ ॥

कपोतभस्मधूमास्थिसर्पच्छत्रकसन्निभाः ।
दन्तयोस्त्वशुभास्तावच्छायाः पञ्चविधा अपि ।
अतः परं प्रवक्ष्यामो नेत्रयोरपि लक्षणम् ॥ ३६७ ॥

स्निग्धे मधुनिभे दीप्ते कलविंकाक्षिसन्निभे ।
रक्तपद्मदलच्छाये पद्मरागमणिप्रभे ॥ ३६८ ॥

निर्धूमाग्निशिखाकारे इन्द्रनीलप्रभे तथा ।
सौम्यदृष्टिसमायुक्ते त्र्यङ्गुले लोचने शुभे ॥ ३६९ ॥

स्निग्धे वृद्धिकरे भर्तुर्मधुपिङ्गे जयप्रदे ।
दीप्ते दीप्तिकरे चैव प्रतापजनने तथा ॥ ३७० ॥

कलविंकाक्षिरूपे च धनधान्यविवर्धने ।
चामीकरकरे नित्यं रक्तपद्मदलप्रभे ॥ ३७१ ॥

पद्मरागनिभे चैव रत्नालंकारकारके ।
निर्धूमाग्निशिखाकारे प्रतिपक्षक्षयक्षमे ।
सौम्यदृष्टिसमायुक्ते लोचने बलवर्धने ॥ ३७२ ॥

मार्जारनकुलक्रोडिशाखामृगनिमेक्षणान् ।
सर्वदोषकरान् राजा गजान्दूरेण वर्जयेत् ॥ ३७३ ॥

स्निग्धं स्थिरं च सौम्यं च भूतले न्यस्ततारकम् ।
सर्वलक्षणप्रतिनागे तु प्रेक्षितं करिणः शुभम्(?) ॥ ३७४ ॥

उद्विग्नं च चलं दीनमविलासिततारकम् ।
ऊर्ध्वाधःपार्श्वदृष्टं च लक्षणं निन्दितं भवेत् ॥ ३७५ ॥

नतोद्गमाद्भवेन्नित्यं तालुकं षोडशाङ्गुलम् ।
षडङ्गुलं पृथक्त्वेन....मध्यगतं भवेत् । ३७६ ॥

तच्चाशुभं शुभं चैव लक्षणैस्समुदाहृतम् ।
शुभं वदामः प्रथमं यथावदनुपूर्वशः ॥ ३७७ ॥

रक्तं श्वेतं च पीतं च कषायं तालुकं शुभम् ।
रक्तं वृद्धिकरं भर्तुस्तथा चायुर्विवर्धनम् ॥ ३७८ ॥

किंशुकाशोकपुष्पाभं रिपुक्षयकरं न्विमम् ।
श्वेत पुष्टिकरं चापि वारणस्यैव जायते ॥ ३७९ ॥

चम्पकाभं सदा भर्तुः रूप्यहेमविवर्धनम् ।
कषायं सर्वदा तालु प्रमातुः सौख्यवर्धनम् ॥ ३८० ॥

कूबरं परिदग्धं च कल्माषं कृष्णमेव च ।
चतुर्विधमनिष्टं स्याद्यथा तदभिधीयते ॥ ३८१ ॥

कृष्णं मसीसमं ज्ञेयं कल्माषं कृष्णलोहितम् ।
मांसलं धूमवर्णं च परिदग्धं प्रकीर्तितम् ॥ ३८२ ॥

कूबरं च तिलच्छायं कथितं शास्त्रवेदिभिः ।
गर्भस्थस्य यदा पित्तं चीयते तालुके भृशम् ॥ ३८३ ॥

कृष्णतालुस्तदा नागो जायते पापलक्षणः ।
व्याधिभिः पीड्यते नित्यं वातपित्तकरोद्भवैः ॥ ३८४ ॥

तृतीयां वा चतुर्थीं वा दशां प्राप्य विनश्यति ।
संग्रामे च परानीके बहुशस्त्रकृतव्रणः ॥ ३८५ ॥

शल्यपातश्च पूर्णाङ्गः कृतान्तभवनं व्रजेत् ।
वातपित्तकफा यस्य चयं कुर्वन्ति तालुके ।
गर्भस्थस्यैव कल्माषं तालुकं तस्य जायते ॥ ३८६ ॥

कृष्णे तालुनि ये दोषा रक्ते ये च गुणाः स्मृताः ।
कल्माषतालुनस्ते च संभवन्ति द्वयोरपि ॥ ३८७ ॥

रक्तच्छाया यदा वंशे पार्श्वयोस्त्वसितप्रभम् ।
तथा मध्यफलं ज्ञेयं गुणदोषसमाश्रयात् ॥ ३८८ ॥

यदा वंशे च कृष्णस्स्यात्पार्श्वयोस्ताम्रता भवेत् ।
भर्तुरुद्वेगजननं कल्माषं तालुकं तथा ॥ ३८९ ॥

किञ्चित्पित्तचयं तालु परिदिग्धं च जायते ।
नागस्याधोरणस्यापि बलक्षयकरं हि तत् ॥ ३९० ॥

कृसरं च तथा तालु पित्तस्पर्शसमुद्भवम् ।
महामात्रविनाशाय वारणस्योपजायते ॥ ३९१ ॥

कृष्णतालोरपि यदा दक्षिणावर्तनं नखे ।
दृश्यते नित्यमेबर्हि(?)तदासौ दोषवर्जितः ॥ ३९२ ॥

एवं जिह्वापि मन्तव्या तालुनः समलक्षणः ।
अरत्निमात्राद्दैर्घ्यात्तु विस्तारेऽष्टाङ्गुला मता ।
जिह्वापि तालुवद्रक्ता सर्वसौख्यप्रदा मता ॥ ३९३ ॥

अतःपरं सृक्कगतं लक्षणं संप्रवक्ष्यते ।
सर्वसौख्यकरे तस्य संपूर्णद्वादशाङ्गुले ॥ ३९४ ॥

दन्तिनो मानहीने तु सृक्कणी मांसवर्जिते ।
मुखरोगकरो नित्यं पण्डितैः परिकीर्त्तितः ॥ ३९५ ॥

अतःपरं प्रवक्ष्यामो लक्षणं चिबुकोष्ठयोः ।
दीर्घरोमा सुसंपूर्णस्त्वोष्ठःपद्मदलप्रभः ॥ ३९६ ॥

षोडशाङ्गुलरोहश्च हस्तार्द्धव्यायतः शुभः ।
भर्तुरायुःकरो दीर्घो दीर्घरोमा च कीर्त्तितः ॥ ३९७ ॥

पूर्णं संपूरयेत्कोशं रक्तः सौभाग्यदो भवेत् ।
अलोमशं वलीयुक्तं मनाक् ताम्रलघु तथा ॥ ३९८ ॥

गजस्योष्ठं न शंसन्ति कवयो दन्तरोगदम् ।
चतुरङ्गुलमानं तु स्थूलं रोमाञ्चितं च यत् ॥ ३९९ ॥

तत्प्रशस्तं गजेन्द्राणां मुखालंकारकारकम् ।
अलोमशं तथा हीनं चिबुकं न प्रशस्यते ।
तद्धि वारणनाथस्य मुखरोगकरं मतम् ॥ ४०० ॥

द्विरत्निमानसंपूर्णे सगदे च शुभे सदा ।
मानं च कर्णपाल्यास्तु मूलादारभ्य गृह्यते ॥ ४०१ ॥

निम्ने च विषमे चैव हीने चैवाशुभे मते ।
मदहानिकरे नित्यं सगदे कर्णरोगदे ॥ ४०२ ॥

वाहित्थं वातकुम्भाधः पूर्णं हस्तायतोन्नतम् ।
त्रिरत्निपरिणाहं च करणं सत्वशक्तिदम् ॥ ४०३ ॥

कथितं गजशास्त्रज्ञैर्हीनं निम्नं च गर्हितम् ।
मुखरोगकरं ज्ञेयं सत्वहानिकरं च यत् ॥ ४०४ ॥

द्वादशाङ्गुलविस्तारं दैर्घ्येणाष्टादशाङ्गुलम् ।
व्यस्तं शुक्तिपुटाकारं वातकुम्भं हि भूमिदम् ॥ ४०५ ॥

वामनं च मधून्नं च परिणाहविवर्जितम् ।
अव्यक्तं च न शस्तं स्याद्वातकुम्भे विपत्करम् ॥ ४०६ ॥

गजवृद्धिकरे नित्यं निर्याणे जयकारके ।
संपूर्णे सुकुमारे च सुप्रशस्ते प्रकीर्त्तिते ।
गर्ताकारे च निर्याणे कठिने चातिकुत्सिते ॥ ४०७ ॥

शिरसो रोगजनने गजस्याधोरणस्य च ।
इदमेव हि विज्ञेयं लक्षणं कटपार्श्वयोः ॥ ४०८ ॥

अतःपरं प्रवक्ष्यामः कुम्भयोरपि लक्षणम् ।
समौ दीर्घकचाक्रान्तौ विस्तीर्णशिखरौ तथा ॥ ४०९ ॥

षट्त्रिंशदङ्गुलानाहावेकहस्तायतौ तथा ।
कर्णमूलात्समारभ्य हस्तार्धजनितोच्छ्रयौ ॥ ४१० ॥

सुसंहतौ च पीनौ च कामिनीकुचसन्निभौ ।
समाक्रन्तललाटौ च देहच्छायासमप्रभौ ॥ ४११ ॥

आरोहकशरीरार्धदर्शनान्तरितक्षमौ ।
सश्रीकौ च सुवृत्तौ च शुभौ कुम्भौ प्रकीर्त्तितौ ॥ ४१२ ॥

समौ च दीर्घरोमाणौ भर्तु स्त्रीसौख्यवर्धनौ ।
विस्तीर्णशिखरौ वापि राज्यविस्तारकारकौ ॥ ४१३ ॥

समानौ रिपुनाशाय तथैव च समुन्नतौ ।
सुसंहतौ च पीनौ च वरस्त्रालाभकारकौ ।
शत्रुनाशकरौ ज्ञेयौ कामिनीकुचसन्निभौ ॥ ४१४ ॥

समाक्रान्तललाटौ च सुप्रभौ रोगनाशनौ ।
आरोहस्थगितार्धौ च सश्रीकौ च जयप्रदौ ॥ ४१५ ॥

वृत्तौ च हस्तिनां कुम्भौ पुष्पालंकारकारकौ ।
शुभ च लक्षणं ह्येतदशुभं कथ्यतेऽधुना ॥ ४१६ ॥

विषमत्वं विरोमत्वं देहच्छविविवर्णता ।
समताकण्ठपृष्ठेन समाधिक्यमपूर्णता ॥ ४१७ ॥

व्यस्तता वामनत्वं च परिणाहविहीनता ।
तनुभावः शिखरयोः कुम्भदोषा इमे स्मृताः ॥ ४१८ ॥

भर्तुश्चापत्करौ ज्ञेयौ विषमौ रोमवर्जितौ ।
देहच्छविविवर्णौ च शत्रुसौख्यविवर्धनौ ॥ ४१९ ॥

कण्ठपृष्ठसमौ ज्ञेयौ (चैव) भर्तुरायुर्विवर्धनौ ।
मानाधिकौ च हीनौ च यातुरुत्सादकारकौ ॥ ४२० ॥

ह्रस्वौ च वामनौ चैव भर्तुः कीर्त्तिविनाशनौ ।
परिणाहविहीनौ च कोशक्षयकरौ मतौ ।
शिखरस्य तनुत्वेन युक्तौ कुम्भौ च रोगदौ ॥ ४२१ ॥

कचानां सांप्रतं भेदो लक्षणं चापि कथ्यते ।
मस्तकस्थाः कचाः कोशा नेत्रस्थाः पक्ष्मसंज्ञिकाः ॥ ४२२ ॥

वालधेः प्रान्तसंस्थाश्च वालाः इत्यभिसंज्ञिताः ।
शेषदेशगता ये च रोमशब्देन कीर्त्तिताः ॥ ४२३ ॥

सांप्रतं संप्रवक्ष्यामः केशानामपि लक्षणम् ।
अभिन्ना ऋजवस्स्निग्धास्समास्तुल्या घनास्तथा ॥ ४२४ ॥

केशा वारणनाथस्य क्षेमवृत्तिकरा मताः ।
रूक्षास्सुनिष्ठुराः पिङ्गास्त्रुटितान्ता जुगुप्सिताः ॥ ४२५ ॥

कुर्वन्ति दन्तिनो नित्यं पीलु(डां) नाथस्य चाशुभम् ।
कचानां पक्ष्मसंज्ञानां लक्षणं वक्ष्यते ततः ॥ ४२६ ॥

स्निग्धच्छायानिकृष्टानि समानिच दृश्यतोनि च(?) ।
घनच्छिद्रविहीनानि पक्ष्माण्यतिशुभानि वै ।
नागानां स्वामिनः सौख्यं कुर्वन्ति रमणीगतम् ॥ ४२७ ॥

बाह्योन्नतानि रूक्षाणि दीर्घाण्यतिघनानि च ।
मृदूनि पिङ्गवर्णानि पक्ष्माणि करिणां यदा ॥ ४२८ ॥

भर्तुरन्तःपुरोत्पन्नं दुःखं कुर्वन्ति मानसे ।
वालानामथ वक्ष्यामो लक्षणं मुनिसंमतम् ॥ ४२९ ॥

दृढाःस्निग्धाः प्रलंबाश्च दृष्टान्ताः षट्पदप्रभाः ।
तालवृन्तसमाकाराः बाला भर्तुर्जयप्रदाः ॥ ४३० ॥

शुनः पुच्छसमाकाराः कपिलास्स्फुटितास्तथा ।
अनत्वातिशयो(:)पेतास्सावर्तास्त्वतिनिन्दिताः ॥ ४३१ ॥

भर्तुर्यातुर्गजानां च नित्योद्वेगकराश्च ते ।
अतःपरं प्रवक्ष्यामो रोम्णामपि च लक्षणम् ॥ ४३२ ॥

न संख्या नैव मानं च रोम्णां चैव प्रकीर्त्तितम् ।
देहच्छायासवर्णत्वं मृदुत्वं च तथापरम् ॥ ४३३ ॥

अनाविलत्वं मृदुता तथा चास्फुटिताग्रता ।
अयुग्मता च सूक्ष्मत्वं रोम्णां सप्तगुणाःस्मृताः ॥ ४३४ ॥

दोषाश्च सप्त संख्याताः स्युर्गुणानां विपर्ययात् ।
शुभानि शुभकर्तॄणि दुःखदान्यशुभानि च ।
अतःपरं प्रवक्ष्यामो मुख्य[ख]स्यापि च लक्षणम् ॥ ४३५ ॥

स्निग्धान्यापूर्णगण्डानि गिरिकूटनिभानि च ।
आकर्णमेघपूर्णानि पूजितानि मुखानि वै ॥ ४३६ ॥

सहस्रदलरूपाणि मुख्य[खा]नि शुभदानि च ।
रोमहीनं कृशं ह्रस्वं निम्नत्राहित्थनिष्प्रभम् ॥ ४३७ ॥

वराहलोचनाकान्तमदृढं चिबुकं तथा ।
ललाटतटपर्यन्तगर्ताकृतिभिरन्वितम् ॥ ४३८ ॥

सगदाहीनतायुक्तं मुखं नागस्य निन्दितम् ।
अतःपरं प्रवक्ष्यामः कर्णयोरपि लक्षणम् ॥ ४३९ ॥

द्व्यरत्निमात्रसंयुक्तौ खसाजालविवर्जितौ ।
समत्वरौ महाच्छिद्रस्निग्धच्छायासमन्वितौ ॥ ४४० ॥

कपोलमण्डलास्फालकृतशब्दौ मुहुर्मुहुः ।
कर्णौ चामरसंकाशौ मृदुरोमकृताचितौ ।
अजर्झरमृदुप्रान्तावीषद्द्विगुणचूलिनौ ॥ ॥ ४४१ ॥

मयूरतालवृन्ताभौ सुविस्तीर्णौ समौ शुभौ ।
द्व्यरत्निमानसंयुक्तौ भर्तुरायु करौ मतौ ॥ ४४२ ॥

खसाजालविनिर्मुक्तौ शिरोरोगविनाशनौ ।
समत्वरौ समच्छिद्रौ गजलाभकरौ मतौ ॥ ४४३ ॥

स्निग्धौ कान्तिकरौ नित्यं जयदौ दुन्दुभिस्वनौ ।
शत्रुनाशकरौ प्रोक्तौ मुदुरोमकृताचितौ ॥ ४४४ ॥

अजर्झरमृदुपान्तौ प्रमातुस्सौख्यदायकौ ।
गजस्योपचयायैवमीषद्द्विगुणचूलिकौ ॥ ४४५ ॥

मयूरतालवृन्ताभौ तुरङ्गबलवर्धनौ ।
सुविस्तीर्णौ समौ चैव भर्तुर्मूलाभकारकौ ॥ ४४६ ॥

कर्णयोस्तु समाख्यातमस्माभिः शुभलक्षणम् ।
निर्लोमशौ स्वमार्कण्डौ तनुच्छिद्रौ तनुत्वचौ ॥ ४४७ ॥

संकटौ विषमौ रूक्षौ त्रुटितान्तौ सुनिष्ठुरौ ।
स्तब्धौ च वर्तुलौ चैव कर्णौ नागस्य निन्दितौ ॥ ४४८ ॥

स्निग्धौ कान्तिकरौ नित्यं जयदौ दुन्दुभि(:)स्वनौ ।
शत्रुनाशकरौ प्रोक्तौ................ ॥ ४४९ ॥

फलं च सांप्रतं ब्रूमो यथावदनुपूर्वशः ।
निर्लोमशौ स्वसाकीर्णौ गजस्य कष्टरोगदौ ॥ ४५० ॥

तनुच्छिद्रौ बलघ्नौ च दोषदौ च तनुत्वचौ ।
संकटौ विषमौ रूक्षौ भर्तुः क्लेशकरौ मतौ ॥ ४५१ ॥

निष्ठुरौ त्रुटितान्तौ च पातुःकोशकरौ मतौ ।
स्तब्धौ च वर्तुलौ चापि राजस्वामिविनाशकौ ॥ ४५२ ॥

कण्ठस्य सांप्रतं ब्रूमो यथावदनुपूर्वशः ।
अवक्रः परिणाहेन भवेत् षष्ठ्यधिकं शतम् ॥ ४५३ ॥

अङ्गुलानां तथायामे द्वादशैवाङ्गुलानि तु ।
संपूर्णपिण्डकोदग्रश्चान्तर्मणिविभूषितः ॥ ४५४ ॥

कण्ठो वारणनाथानामेवंभूतश्च पूजितः ।
ऋजुरोमर्जुजननः संपूर्णः कार्यसिद्धिदः ॥ ४५५ ॥

ह्रस्वो विजयकृद्धर्तुः कीर्तिदः पूर्णपिण्डदः ।
उदग्रो वंशवृद्धिं तु प्रतापं कुरुते तथा ॥ ४५६ ॥

अन्तर्मणिसमायुक्तो मणिरत्नप्रदो भवेत् ।
वक्रो हीनश्च दीर्घश्च कण्ठस्त्वशुभदो भवेत् ।
आधोरणप्रमाणेश्च(?)क्रमशः कुञ्जरस्य च ॥ ४५७ ॥

दैर्घ्येण हस्तमानं तु विस्तीर्णं चासनं शुभम् ।
विस्तीर्णं विस्मृतं राज्यं संपूर्णं कुरुते जयम् ॥ ४५८ ॥

विपरीतगुणं ज्ञेयं समानं राज्यहानिदम् ।
वंशस्यातः प्रवक्ष्यामो लक्षणं च शुभाशुभम् ॥ ४५९ ॥

षण्णवत्यङ्गुलायाममासनापश्चिमासनम्(?) ।
यावत्पूरितपार्श्वश्च वंशश्चापलताकृतिः ॥ ४६० ॥

शुभो ज्ञेयो गजेन्द्राणामायतः कुरुते सुखम् ।
पूर्णपार्श्वे स्वलाभं च घनरूपोऽन्नदो भवेत् ॥ ४६१ ॥

अत्युच्छ्रितो निम्नपार्श्वो ह्रस्वो वंशो न शस्यते ।
राज्ञश्चोदररोगाणां कर्ता च स भवेत्सदा ॥ ४६२ ॥

पेचकः पुच्छमूलाधो दैर्घ्येणाष्टांगुलस्तु यः ।
अङ्गुलस्तु पृथुत्वेन गजभर्तुं सुखप्रदः ॥ ४६३ ॥

पेचकः पुच्छमूलाधःस्थितो दीर्घोऽतिलंबितः ।
करोति महतीं पीडां राज्ञश्चाधोरणस्य च ।
अवक्रं ऋजु दीर्घं च ग्रन्थिहीनं च पुच्छकम् ॥ ४६४ ॥

गोपुच्छतालवृन्तान्तं कचप्रान्तविभूषितम् ।
भूमिं नैव स्पृशेद्यस्तु चतुर्भिश्चांगुलैस्सदा ॥ ४६५ ॥

स शुभो वालधिर्ज्ञेयस्तावद्भर्तुः सुखप्रदः ।
वक्रं स्थूलं च ह्रस्वं च पुच्छकं न विवर्जितम् ॥ ४६६ ॥

समानाहं च नागस्य सर्वदोषकरं भवेत् ।
स्निग्धं षष्ठांगुलायाममानाहे षोडशांगुलम् ॥ ४६७ ॥

शिरोजालविनिर्मुक्तमाम्रपल्लवसन्निभम् ।
द्व्यङ्गुलश्रोतसा युक्तं रक्तबिन्दुविवर्जितम् ॥ ४६८ ॥

मेढ्रं प्रशस्तं विज्ञेयं भर्तुर्जीवितवर्धनम् ।
अतिप्रमाणं ह्रस्वं च कर्बुरं विगतप्रभम् ॥ ४६९ ॥

शिरोजालयुतं मेढ्रं गजहास्तिपदुःखदम् ।
अतःपरं प्रवक्ष्यामो गात्रयोश्शुभलक्षणम् ॥ ४७० ॥

सार्धरत्निर्द्विरत्निश्च त्रिरत्निश्च शतांगुलः ।
सन्धानभागाः क्रमशः परिणाहः प्रकीर्त्तितः ।
आयामो द्वित्रिरत्निः स्यात्समत्वं कचहीनता ॥ ४७१ ॥

मांसलत्वं घनत्वं च गात्रयोस्तु गुणाः स्मृताः ।
आनाहे च तथायामे भर्तुरारोग्यकारके ॥ ४७२ ॥

समे च कचहीने च गजलाभकरे मते ।
गजस्य पुष्टिदे नित्यं मांसले च घने स्मृते ॥ ४७३ ॥

गात्रे वारणनाथस्य एवंभूते शुभे मते ।
हीने तनुर्न दीर्घे च सममांसोच्चयैस्तथा(?) ।
विषमे च कचाक्रान्ते गात्रे नागस्य निन्दिते ॥ १७४ ॥

हीने तनुर्न दीर्घे च प्रमातुर्विनिपातने ।
सममांसोच्चये पातुः विषमे च विपत्करे ॥ ४७५ ॥

कचाविले गजस्यैव विनाशजनने मते ।
संपूर्णे चाङ्गफलके गजस्य सुखवर्धने ॥ ४७६ ॥

विकटे ते तु नागस्य गात्ररोगकरे सदा ।
कायोपचयकर्ता स्यात्संपूर्णकमलाकृतिः ॥ ४७७ ॥

उरोमणिस्तथा हीनो गजस्य गलरोगकृत् ।
स्निग्धाः शिता नखाःशस्ताश्चन्द्रार्धाकृतयस्तथा ॥ ४७८ ॥

भर्तुरारोग्यजयदा विपरीता न शोभनाः ।
हीनाः कृष्णाश्च रूक्षाश्च खण्डाश्च न नखाः शुभाः ॥ ४७९ ॥

सदा च रोगदा हीनाः कृष्णा भर्तुर्विनाशनाः ।
खण्डा रूक्षा गजस्यैव पादव्याधिविवर्धनाः ॥ ४८० ॥

विंशत्यष्टादशमिता गजानां शुभदा नखाः ।
इतोऽन्यसंख्यका ये तु अशुभाय भवन्ति ते ॥ ४८१ ॥

द्वाविंशतिनखो नागः कुरुते निधनं प्रभोः ।
नखानामेकविंशत्या गजो नाशयते प्रभुम् ॥ ४८२ ॥

एकोनविंशतिनखो युवराजं विनाशयेत् ।
नखैः सप्तदशभिर्महिषीं नाशयेद्गजः ॥ ४८३ ॥

वारणः षोडशनखः समरे हन्ति नायकम् ।
कुञ्जरः पञ्चदशभिर्नखैर्हन्याच्चमूपतिम् ॥ ४८४ ॥

चतुर्दशनखः कुर्याद्व्याधिं वै पुरवासिनाम् ।
त्रयोदशनखो हस्ती राष्ट्रनाशकरः स्मृतः ।
पत्यश्वनाशं कुरुते गजो द्वादशभिर्नखैः ॥ ४८५ ॥

एकादशनखो नागो धनहानिकरः सदा ।
पुरदाहं दशनखः करी कुर्यादसंशयः ॥ ४८६ ॥

चतुरङ्गबलं हन्ति कुञ्जरो नवभिर्नखैः ।
विधत्तेऽष्टनखो नागः पुरोहितकुलक्षयम् ॥ ४८७ ॥

मतङ्गजस्सप्तनखः प्रतिहारविनाशनः ।
षण्णखो द्विरदोऽमात्यं निधनं नियतं नयेत् ॥ ४८८ ॥

द्विपः पञ्चनखो हन्यान्नरं भोजनकारकम् ।
चतुर्नखो गजो हन्याद् द्वारपालानशेषतः ।
त्रिनखोऽनेकपो नाशं विषयाधिकृतं नयेत् ॥ ४८९ ॥

अन्त.पुरानुबन्धान् हि नाशयेद् द्विनखो गजः ।
यद्येकनखरो नागो राज्यनाशकरो भवेत् ॥ ४९० ॥

अनुत्पन्ननखं नागं समर्थमपि संत्यजेत् ।
स यतस्सत्वरं राष्ट्रमशेषं विफलं नयेत् ॥ ४९१ ॥

अत.परं प्रवक्ष्यामः पादयोरपि लक्षणम् ।
हस्तप्रमाणौ दैर्घ्येण कूर्माकारौ सुखप्रदौ ॥ ४९२ ॥

हीनपादनखौ रूक्षौ चरणौ दन्तिदुःखदौ ।
धेनुकाङ्गविशेषस्य वक्ष्यतेऽथ शुभाशुभम् ॥ ४९३ ॥

नासन्नौ नातिविक्षिप्तौ शुभ्रौ नातिविलम्बितौ ।
शस्तौ स्थिरौ सुवृत्तौ च सुक्षीरौ च समौ स्तनौ ॥ ४९४ ॥

विपरीतगुणौ तौ चेद् भर्तुस्सर्वार्थदायकौ ।
योनिः शुभा मनोज्ञा च योनिदोषविवर्जिता ॥ ४९५ ॥

निर्मांसा पूतिगन्धा वा विरूपा दोषसंयुता ।
एवं भद्रगजस्योक्तमस्माभिश्चाङ्गलक्षणम् ॥ ४९६ ॥

वक्ष्यते चाथ मन्दस्य मानान्यति मृषार्चितम्(?) ।
अधिकं पुष्करं तस्य मांसलत्वेन जायते ॥ ४९७ ॥

प्रभायान्तु कषायस्यान्मले लाङ्गूलपञ्चकम्(?) ।
किञ्चिन्न्यूने च विज्ञेये श्रोतसी चतुरंगुले ॥ ४९८ ॥

स्थूला पञ्चांगुलायामा स्यादंगुल्यपि मानतः ।
हस्तोऽपि पूर्वमानस्य स्थूलत्वेनाधिको भवेत् ।
रोमशो नातिवृत्तश्च पृथुलः षड्भिरंगुलैः ॥ ४९९ ॥

आयामेन च हीनः स्यात्पूर्वमानात् षडंगुलैः ।
अतिगोपुच्छसंस्थानः कृष्णबिन्दुविचित्रितः ॥ ५०० ॥

दन्तवेष्टावतिस्थूलौ कचाक्रान्तौ सुनिष्ठुरौ ।
आनाहे हस्तमात्रौ तु सार्धहस्तद्वयायतौ ॥ ५०१ ॥

पीयूषकुमुदाभौ च किञ्चिच्चंपकपिङ्गळौ ।
स्निग्धौ गतोदकौ चैव दन्तौ मन्दस्य कीर्त्तितौ ॥ ५०२ ॥

स्निग्धे मधुनिभे नेत्रे कलविंकाक्षिसन्निभे ।
रक्तपद्मदलच्छाये पद्मरागमणिप्रभे ॥ ५०३ ॥

नीलच्छाये च तीक्ष्णे च मन्दस्याच्छविलोचने ।
त्र्यंगुले च कचैर्ज्ञेये मांसोपचयपूरिते ॥ ५०४ ॥

ज्ञेये कटोपरि तथा श्रोतसी द्व्यङ्गुलस्थिते ।
एकादशांगुलानाहं द्वाविंशत्यंगुलायतम् ॥ ५०५ ॥

किञ्चिन्नतं कचाक्रान्तं वाहित्थं तु प्रकीर्त्तितम् ।
प्रतिमानं च विज्ञेयं हस्तश्च चतुरंगुलः ।
अध्यर्धारत्नि चाक्ष्णोस्तु प्रमाणेनान्तरं भवेत् ॥ ५०६ ॥

आयामेन तु विज्ञेयं त्र्यधरस्तु दशांगुलः ।
विंशत्यंगुलमानस्तु परिणाहो विधीयते ॥ ५०७ ॥

त्र्यंगुलं चिबुकं ज्ञेयं सृक्कणी तु नवांगुले ।
षड्विंशदंगुलायामे सगदे परिकीर्तिते ॥ ५०८ ॥

अध्यर्धरत्निकौ कर्णौ विस्तारेण कचाविलौ ।
कषायपल्लवौ स्थूलौ कृष्णबिन्दुविचित्रितौ ॥ ५०९ ॥

षड्भागेन करायामावतिस्थूलौ कचाविलौ ।
पञ्चांगुल्यन्तरौ पीनौ कुम्भौ चाष्टांगुलोन्नतौ ॥ ५१० ॥

कर्णात्कर्णान्तरं यावत् षण्णवत्यंगुलं शिरः ।
वातकुम्भं तथा ज्ञेयं स्थूलं सप्तदशांगुलम् ॥ ५११ ॥

अङ्गुलानां शतं सार्धमानाहो द्व्यङ्गुलाधिकः ।
आयतत्वं च कण्ठस्य दशांगुलमिति स्मृतम् ॥ ५१२ ॥

विंशत्यंगुलमानं स्यादन्तर्गलमणिर्भवेत् ।
भद्रस्यैवासनं ज्ञेयं तथा वंशस्त्र्यरत्निकः ।
षडंगुलोच्छ्रितस्स्थूलः तुल्यतानुगतो भवेत् ॥ ५१३ ॥

पुच्छमूलाद्व्यरत्निस्तु जायते पश्चिमासनम् ।
उच्छ्रायेण च हीनं स्यादासनात् षड्भिरंगुलैः ॥ ५१४ ॥

पेचकोऽष्टांगुलायामो लम्बत्वेनांगुलत्रयः ।
विंशत्यंगुलमानाहे भवेत्पुच्छस्तथा क्रमात् ॥ ५१५ ॥

प्रान्तं यावत्क्रमेणैव क्रियते चांगुलक्षयः ।
दीर्घवालश्च विज्ञेयो भूमेरष्टांगुलस्थितः ॥ ५१६ ॥

इदं वालधिमानं हि मन्दस्य परिकीर्त्तितम् ।
सार्धद्विरत्निके स्थूले चापरे संप्रकीर्त्तिते ॥ ५१७ ॥

उदरं चातिमात्रं स्यान्मेढ्रं हस्तद्वयायतम् ।
विंशत्यंगुलमानाहे कृष्णच्छायं यदा भवेत् ॥ ५१८ ॥
त्रिरत्निकं च दैर्घ्येण प्रमाणं गात्रयोरपि ।
पञ्चचत्वारि चत्वारि गद्धालानि नखाः क्रमात् ॥ ५१९ ॥
आपाण्डुविषकन्दाभा भवन्त्यपरपादयोः ।
अनेनैव तु मानेन गात्रपादसमाश्रयाः ।
नखा नागस्य विज्ञेयाश्चरणाश्च कचाविलाः ॥ ५२० ॥
उरोमणिस्तथा ज्ञेयोऽरत्निमात्रोऽतिमांसलः ।
एते प्रदेशाः कथिता विशेषान्मन्दसंज्ञके ॥ ५२१ ॥
न प्राप्ता ये च भद्रस्य विज्ञेयास्समलक्षणाः ।
मृगस्य सांप्रतं ब्रूमः प्रदेशान् लक्षणान्वितान् ॥ ५२२ ॥
ह्रस्वा ह्रस्वतराः केचित्केचिद्दीर्घतरा मताः ।
अतो न घटते तस्य लक्षणं मन्दभद्रयोः ॥ ५२३ ॥
अङ्गुलं पुष्करं तस्य त्र्यङ्गुले श्रोतसी तथा ।
अङ्गुलानि तु चत्वारि कीर्तिता तस्य चांगुळी ॥ ५२४ ॥
करस्य च त्र्यरत्निः स्यादानाहे सार्धरत्निकम् ।
बाहित्थपुष्करे यावन्मानं सद्भिरुदाहृतम् ॥ ५२५ ॥
तथा तनुतरौ दन्तौ दैर्घ्ये(ण) सार्धद्व्यरत्निकौ ।
ह्रस्वौ तु मस्तकौ स्यातां ज्ञेयौ सप्तदशांगुलौ ॥ ५२६ ॥
प्रतिमानं तथा ज्ञेयं निम्नं पञ्चदशांगुलम् ।
द्व्यङ्गुलं चिबुकं तु स्यादधरस्तु षडङ्गुलः ।
अष्टाङ्गुलस्तु नाहेन सृक्कणी तु षडङ्गुले ॥ ५२७ ॥
विंशांगुले तु सगदे कपोलौ मध्यनिम्नगौ ।
कटौ द्व्यङ्गुलमात्रौ तु निर्याणं चतुरंगुले ॥ ५२८ ॥
नेत्रे चापि तथा स्यातां निष्प्रभे स्थूलतारके ।
नातिव्यक्तमतङ्गःस्याद्वातकुम्भं दशाङ्गुलम् ॥ ५२९ ॥

गर्ताकारं च हीनं च कटकुम्भान्तरं भवेत् ।
अष्टांगुलान्तरे कुम्भे आयामे षोडशांगुले ॥ ५३० ॥

विंशत्यंगुलकौ कर्णौ स्तब्धौ रूक्षौ च वर्तुलौ ।
षण्णवत्यंगुलानाहा त्वायामे षोडशांगुला ॥ ५३१ ॥

ग्रीवा मृगस्य विज्ञेया करालं चासनं भवेत् ।
सार्धद्व्यरत्निकायामः कुब्जस्तुङ्गोऽतिमात्रया ॥ ५३२ ॥

विंशो मृगस्य विज्ञेयो निम्नतल्यलनिः प्रभः(?) ।
स्थूलास्थिविषमं निम्नं पुच्छादध्यर्धरत्निकम् ॥ ५३३ ॥

आसनेन समं चैव मृगस्य पश्चिमासनम्(?) ।
पञ्चांगुलस्तु विज्ञेयो पेचको गुदसंश्रितः ।
वक्रो ग्रन्थिसमाकीर्णः स्थूलो ह्रस्वश्च वालधिः ॥ ५३४ ॥

अपरा पादपार्ष्णिभ्यां हस्तमात्रसमुच्छ्रिता ।
दीर्घे परे तनू रूक्षे द्विसप्तत्यंगुलायते ॥ ५३५ ॥

तत्प्रमाणे तथा गात्रे चिपि चैवापिनिः प्रभ (?) ।
चरणाश्च गतच्छायाश्चतुस्त्रिद्व्यंगुलैर्नखैः ॥ ५३६ ॥

संयुताः स्फुटिता निम्ना गानेनाष्टादशांगुलाः ।
एवमुद्देशमात्रेण कथितं मृगलक्षणम् ॥ ५३७ ॥

भद्रमन्दमृगाणां हि मिश्रे लक्षणसंकरः ।
तस्मात्तु लक्षणेनैव विज्ञेयं मिश्रलक्षणम ॥ ५३८ ॥

दुर्लभो हि गजो लोके निर्दिष्टः पृथिवीतले ।
तस्माद्दोषापवादास्तु वक्ष्यन्ते मुनिसंमताः ॥ ५३९ ॥

पाददोषक्षयं कुर्यान्नखानां शुभलक्षणम् ।
पादानां लक्षणं चैव गात्रदोषहरं भवेत् ॥ ५४० ॥

पुष्करस्य गुणैर्दोषान् लभन्त्यंगुलिताः....(?) ।
लक्षणं त्वङ्गुलिगतं करदोषविनाशनम् ।
हस्तस्य लक्षणं सम्यक् दन्तदोषान्विनाशयेत् ॥ ५४१ ॥

दन्तयोर्लक्षणं हन्ति दोषान्वाहित्थसंश्रितान् ।
वाहित्थस्य गुणैस्सम्यक् नेत्रदोषक्षयो भवेत् ॥ ५४२ ॥

नेत्रयोर्लक्षणं हन्ति दोषांस्तालुकसंश्रितान् ।
सृक्कदोषविनाशश्च क्रियते तालुलक्षणैः ॥ ५४३ ॥

सृक्कण्योर्लक्षणं कुर्यात्सगदादोषनाशनम् ।
कपोलकटदोषं च नाशयेत्सगदागुणः ॥ ५४४ ॥

निर्याणवातकुम्भानां दोषघ्नः कटयोर्गुणः ।
कुम्भदोषविनाशाय तेषामेव गुणो भवेत् ॥ ५४५ ॥

कर्णदोषविनाशश्च क्रियते कुम्भलक्षणैः ।
कण्ठदोषविनाशाय कर्णलक्षणमेव हि ॥ ५४६ ॥

आसनस्य हि ये दोषास्तान्हरेत्कण्ठजो गुणः ।
वंशदोषक्षयकरश्चासुरस्य गुणो भवेत् ।
गुणा घ्नन्ति च वंशस्य दोषान् भल्यलसंस्थितान् ॥ ५४७ ॥

पश्चिमासनदोषघ्नं लक्षणं उल्वलाश्रितम् ।
कुक्षिपेचकदोषघ्नं पश्चिमासनलक्षणम् ॥ ५४८ ॥

गुणाः पेचककुक्षिस्थाः पुच्छदोषविनाशनाः ।
मेढ्रदोषक्षयं कुर्यात्पुच्छलक्षणमेव हि ॥ ५४९ ॥

मेढ्रस्य गुणा घ्नन्ति दोषौघमपराश्रिताम् ।
अण्डकोशगतं दोषमपरालक्षणं हरेत् ॥ ५५० ॥

नाडिदोषक्षयं कुर्यादण्डकोशस्य लक्षणम् ।
नाभेर्गुणैश्च हन्यन्ते दोषास्स्तनसमाश्रयाः ॥ ५५१ ॥

उरोमणिगतान्दोषान् नाशयेत्स्तनलक्षणम् ।
चिबुकस्य हरेद्दोषानुरोमणिगुणोदयः ॥ ५५२ ॥

यथा दोषक्षयस्तावल्लक्षणैः क्रियते शुभैः ।
एवं दोषातिरेकोऽपि प्रदेशगुणनाशनः ॥ ५५३ ॥

करकुम्भविषाणाक्षिकर्णलक्षणसंयुतः ।
सर्वैरेवाशुभैरन्यैर्लक्षणैस्तु शुभो गजः ॥ ५५४ ॥

कल्याणं चाप्यकल्याणं शीलं द्विविधमुच्यते ।
गजानां वक्ष्यते तत्तु यथाशास्त्रं यथाक्रमम् ।
कल्याणं जातिरव्यालोऽक्षीणश्शान्तो बुभुक्षितः ॥ ५५५ ॥

भयार्दितो वा मूढो वादृष्टश्चैवातिमात्रया ।
रात्रौ वा दिवसे वापि निर्विकारश्च यो भवेत् ॥ ५५६ ॥

कल्याणशीलस्स ज्ञेयो गजो गजविचक्षणैः ।
विकारं कुरुते यस्तु पीड्यमानः क्षुधार्दितः ।
तमकल्याणिनं राजा दुष्टं नागं न योजयेत् ॥ ५५७ ॥

अशिशुश्च शिशुश्चैव क्रोधो द्विविध उच्यते ।
वर्ण्यते स यथाशास्त्रं वारणानां यथाक्रमम् ॥ ५५८ ॥

क्षिप्रं गृह्णाति यः कोपं दुर्निवारं सुदुःसहम् ।
वार्यमाणोऽपि यत्नेन न शमं याति मुह्यति ॥ ५५९ ॥

स ज्ञेयस्त्वशिशुक्रोधो राज्ञा हस्तिरणप्रियः ।
उद्वेजितोऽपि कालेन कोपं बध्नाति मध्यमम् ॥ ५६० ॥

निवार्यमाणश्च तथा शीघ्रं कोपान्निवर्तते ।
एवंविधश्च यो हस्ती स शिशुक्रोध उच्यते ॥ ५६१ ॥

मध्यमश्च भवेदेष गजस्सङ्ग्रामकर्मणि ।
अतःपरं प्रवक्ष्यामो मातङ्गगतिलक्षणम् ॥ ५६२ ॥

समा च लघुपादा च वेगे चाप्ययुता सदा ।
दीर्घक्रमा सुखक्षिप्तगात्रसंचारहारिणा ॥ ५६३ ॥

शुभलक्षणयुक्ता स्यान्नरस्य च गजस्य च ।
मत्तगोवृषसिंहानां गतेस्तुल्या शुभा गतिः ॥ ५६४ ॥

क्लेशचालितगात्रा या विषमासु लघुक्रमा ।
वेगे च मन्दसंचारा विशेषान्दोलितासना ॥ ५६५ ॥

मृगस्य कृकलासस्य जम्बूकस्य खरस्य च ।
गमनेन समा या तु साधमा दन्तिनां गतिः ॥ ५६६ ॥

सांप्रतं च यथाशास्त्रं कथ्यते वेगलक्षणम् ।
चतुर्विधानां जातीनामुत्तमाधममध्यतः ॥ ५६७ ॥

न वालं नैव वृद्धिं च पञ्चद्वयपदे स्थितम् ।
गजोत्थानसहोत्थानं नरवेगप्रधाविनम् ॥ ५६८ ॥

पञ्चाशत्क्रममात्रेण यश्च गृह्णाति वारणम् ।
कोपाविष्टेन मनसा स वेगेनोत्तमो गजः ।
यस्तु गृह्णाति वेगेन नरं सप्तपदान्तरम् ॥ ५६९ ॥

पदानां शतमात्रेण स मध्यमजवो मतः ।
यस्तु पञ्चपदस्थं हि नरं गृह्णाति चाग्रतः ॥ ५७० ॥

पदानां च शते सार्धे स हीनजव उच्यते ।
शतद्वयं वा धनुषां गच्छेदुन्नमिताननः ॥ ५७१ ॥

द्वात्रिंशता च मात्राभिः स उत्तमगजो मतः ।
पञ्चाशता च मात्राभिः यो याति च शतद्वयम् ॥ ५७२ ॥

स मध्यमोऽधमो ज्ञेयो मात्राणां च शतेन हि ।
एवं परीक्ष्यते तावद्वेग उत्तमहस्तिनः ॥ ५७३ ॥

चतुष्पदानां सर्वेषां सन्तापेन श्रमेण च ।
ततो गजमुखे तावत्सर्गाः स्वेदवहाःशिराः ॥ ५७४ ॥

विमुञ्चन्ति क्रमेणैव सर्वस्वेदसमुद्भवम् ।
तच्च संगृह्य मुखतः करश्रोतोभिरम्बरे ॥ ५७५ ॥

दिक्षु देहे च भूमौ च क्षिपन्ति कृतशीकरम् ।
यथा हिमवतः श्वभ्रमार्गादायति वै जलम् ।
सन्तापेन मुखादेवं स्वेदः स्रवति दन्तिनाम् ॥ ५७६ ॥

गजानामथ वक्ष्यामः स्वरांश्चैव शुभाशुभान् ।
जिह्वामूलस्तालुगळ[कण्ठ]हस्त........शिरोधराः ॥ ५७७ ॥

कपोलश्च भवन्त्यष्टौ स्वरस्थानानि दन्तिनाम् ।
ताल्वोष्ठस्वनितं स्निग्धं द्योतायितमुदाहृतम् ॥ ५७८ ॥

जिह्वामूलसमुत्थं च फेनायितमुदाहृतम् ।
कण्ठदेशसमुद्भूतः शब्दो गर्जितसंज्ञिकः ॥ ५७९ ॥

कपोलजनितःशब्दो हास इत्यभिधीयते ।
हस्ताग्रविवरोद्भूतः शब्दो वासः प्रकीर्त्यते ॥ ५८० ॥

मुखचन्द्रकपोलाभ्यां बृंहितं यत्प्रजायते ।
असकृन्मधुरं हृष्टं सहितं तत्प्रचक्षते ॥ ५८१ ॥

हसक्रोधस्वरैस्ताल्वैः स्वरो दारो हसो द्विधा ।
शुभान्येतानि नागानां लक्षणानि महीपतेः ॥ ५८२ ॥

सुवर्णवंशयानानि नियतं वर्धयन्ति हि ।
मुखेन दर्दुररवं कर्णाभ्यां दुन्दुभिस्वनम् ।
करेण मर्दलध्वानं यः कुर्यात्स शुभप्रदः ॥ ५८३ ॥

घनानां दुन्दुभीनां च मृदङ्गानां स्वनोपमाः ।
स्वरा गजानां जायन्ते यदा ते शुभदास्तदा ॥ ५८४ ॥

गम्भीरास्सौम्यहृष्टाश्च स्वस्थाः शृङ्गारिणस्तथा ।
स्निग्धाः स्वराःकरीणां च भवन्ति शुभकारिणः ॥ ५८५ ॥

यदा करोति मातङ्गः चिबुकार्पितशब्दितम् ।
काष्ठभङ्गध्वनिनिभं नादं वा न शुभं तदा ॥ ५८६ ॥

खरोष्ट्र(पिक)कपिकाकानां जम्बूकस्य च नादवत् ।
यदा भवन्ति नागानां स्वरास्ते न शुभास्तदा ॥ ५८७ ॥

रौद्रा रूक्षास्तथा शोकभयजाताश्च निस्वनाः ।
शुभावहा न विज्ञेया गजशास्त्रेषु निश्चितम् ॥ ५८८ ॥

अन्येऽपि गात्ररन्ध्रेभ्यः संभवन्ति हि निस्वनाः ।
मतङ्गजानां तैर्ज्ञेयं न शुभाशुभलक्षणम् ॥ ५८९ ॥

अतःपरं प्रवक्ष्यामो निश्वासस्य तु लक्षणम् ।
निश्वासो द्विविधो ज्ञेयः शुभश्चैवाशुभस्तथा ।
शुभः सुरभिगन्धिः स्याद्दुर्गन्धिस्त्वशुभो मतः ॥ ५९० ॥

विशेषेण पुनश्चैव लक्षणं तस्य कीर्त्त्यते ।
सूक्ष्मता दीर्घता चैव समता च सुगन्धिता ॥ ५९१ ॥

सौकुमार्यमनुष्णत्वं निश्वासस्य गुणास्तु षट् ।
स्थूलता ह्रस्वता चैव दुर्गन्धित्वं तथोष्णता ॥ ५९२ ॥

पारुष्यं विषमत्वं च दोषा अपि भवन्ति षट् ।
दशारत्निप्रमाणं तु रेणुकंपनलक्षितम् ॥ ५९३ ॥

यो निश्वसति दीर्घं च दीर्घायुस्स गजो मतः ।
अतःपरं प्रवक्ष्यामो गजानां वर्णलक्षणम् ॥ ५९४ ॥

आहारस्य विशेषेण वातपित्तकफैस्तथा ।
देशकालगुणैश्चैव बीजयोनिवशेन च ॥ ५९५ ॥

ग्रहालोकननक्षत्रलग्नराशिबलेन च ।
पूर्वकर्मवशाच्चापि धातूनां च विपर्ययात् ।
भवन्ति कारणैरेभिः वर्णा नानाविधाः खलु ॥ ५९६ ॥

दिव्यशस्त्रशुभै[र्भे]दैस्त्रिविधास्ते भवन्ति हि ।
सिन्दूररेणुवैडूर्यविद्युज्जाम्बूनदप्रभाः ॥ ५९७ ॥

लाक्षानीलोत्पलादित्यहरितालनिभाश्च ये ।
अतिश्वेतास्सुरक्ताश्च शुकबर्हिणसप्रभाः ॥ ५९८ ॥

ते तु देवगजास्सर्वे भूतले न भवन्ति हि ।
दैवयोगाब्दके प्रा(प्ते)च्यं तेषां कश्चिद्यदा भवेत् ॥ ५९९ ॥

वन्दनीयश्च पूज्यश्च नासौ शीघ्रो धरापतेः ।
दिव्यवर्णास्त्वमी प्रोक्ता वक्ष्यन्ते शस्त्रवर्णिनः ॥ ६०० ॥

आलोहितश्च कृष्णश्च श्यामो वर्णास्त्रयः शुभाः ।
स्निग्धच्छायासमायुक्तं भवेद्भूतलदन्तिनाम् ॥ ६०१ ॥

गोशृङ्गाङ्गारभस्मास्थिपङ्कमञ्जिष्ठसन्निभाः ।
म्लानपुष्पसवर्णाश्च गजास्त्वेतेऽतिनिन्दिताः ॥ ६०२ ॥

छाया च द्विविधा प्रोक्ता प्रभाच्छायाविभेदतः ।
देहस्य भञ्जनी च्छाया देहद्योतकरी प्रभा ॥ ६०३ ॥

स्थिरा च्छाया हि सहजा बलवृद्ध्या प्रभा स्थिरा ।
स्निग्धा रक्ता च ताम्रा च च्छाया वै तैजसी मता ।
जीमूतसन्निभा स्निग्धा च्छाया सलिलसंभवा ॥ ६०४ ॥

स्निग्धा विविधरूपा च गम्भीरा पार्थिवी स्मृता ।
एतच्छायात्रयं सर्वदोषघ्नं शुभवर्धनम् ॥ ६०५ ॥

निःप्रभा परुषा रूक्षा भस्माकारा तु वा यदि ।
तन्वरूक्षा कृष्णरूपा नाभसी परिकीर्त्तिता ॥ ६०६ ॥

एतच्छायाद्वयं प्रोक्तं निन्दितं सर्वदुःखदम् ।
विनाशयति दावाग्नीन्महावृष्टिर्यथा वने ॥ ६०७ ॥

वारणानां शुभच्छाया कुलक्षयगुणान्हरेत् ।
अशुभापि तथा च्छाया नाशयेत् शुभलक्षणान् ॥ ६०८ ॥

घोरा (चिता)ग्निज्वालेव चन्दनागरुकालिनम् ।
मतङ्गजानां संप्रोक्तं यच्छुभाशुभलक्षणम् ॥ ६०९ ॥

करिणीष्वपि तद्दोषमविरुद्धं च यद्भवेत् ।
यथा गृह्णाति भागेन दोषान् लोकःसमाहितः ।
गुणान् करोति हृदये न तथा कथितानपि ॥ ६१० ॥

दोषघ्नं लक्षणं शस्तं पूर्वाचार्यैरुदाहृतम् ।
तत्तथा वानुमन्तव्यं नान्यथा परिभावयेत् ॥ ६११ ॥

गजाना[म]थ वक्ष्यामः सम्यग्बलपरीक्षणम् ।
गजेन बलहीनेन सुरूपेणापि किं रणे ॥ ६१२ ॥

गुणेभ्योऽपि बलं श्रेष्ठं तत्परीक्षेत पण्डितः ।
शरीरानुगतः प्राणो बलशब्देन कीर्त्यते ।
क्रियते वारणस्थस्य तस्योपायैः परीक्षणम् ॥ ६१३ ॥

जाम्बूनदस्य ताम्रस्य पलानां रजतस्य च ।
अष्टादशसहस्राणि युक्त्या संगृह्य वेगवान् ॥ ६१४ ॥

दशयोजनमध्वानं गच्छति श्रमवर्जितः ।
यो गजो गजमध्ये तु स उत्तमबलः स्मृतः ॥ ६१५ ॥

यश्चतुर्दशसाहस्रं भारमादाय गच्छति ।
सप्तयोजनमध्वानं स मध्यमबलो मतः ॥ ६१६ ॥

दशसाहस्रिकं भारं(गृही)त्वा पञ्चयोजनम् ।
अध्वानं यो हि संयाति स हीनबल उच्यते ॥ ६१७ ॥

अथवा खादिरं स्तम्भं [शिंशुपा] मयमेव वा ।
निर्ग्रन्थिशुभवक्त्व हीनं द्वादशहस्तकम् ॥ ६१८ ॥

सति भागद्विहस्तेन परिणाहेन संयुतम् ।
सुखान्वितं चतुर्हस्तं यो [भिनत्त्यु] त्तमो हि सः ॥ ६१९ ॥

उत्खन्य पातयेच्चापि बलेन महता युतः ।
त्रिहस्तमद्विहस्तं च निखातं च मनोहरम् ॥ ६२० ॥

सप्तहस्तोच्छ्रितं स्तम्भं ग्रन्थिवक्रविवर्जितम् ।
पञ्चाशदङ्गुलीकेन परिणाहेन संयुतम् ॥ ६२१ ॥

भिनत्ति यो गजश्शीघ्रं क्षिपत्युद्धृत्य वा पुनः ।
स गजानां तु सर्वेषां मध्ये मध्यबलो मतः ॥ ६२२ ॥

सुनिखातं त्रिहस्तं स्यात् षड्ढस्तोच्छ्रयमेव तु ।
युक्तं स्थूलतया चैव पूर्वसंख्यार्धमात्रया ॥ ६२३ ॥

भिनत्ति हेलया यस्तु उत्खातं वा करोति यः ।
स्तम्भं कुञ्जरमध्ये तु स हीनबल उच्यते ॥ ६२४ ॥

गुरुत्वं रूपतः श्रेष्ठं गुरुत्वादधिकं बलम् ।
बलादभ्यधिकं सत्त्वं तस्मात्सत्त्वं निरूपयेत् ।
शुद्धस्फटिकसंकाशं सत्त्वं हृदि शरीरिणाम् ॥ ६२५ ॥

दुर्लक्षं विद्यते सम्यगुपायैस्तत्तु लक्षयेत् ।
पदात्यश्वसमूहं वा गजमालातिभीषणम् ॥ ६२६ ॥

वेगोत्थानसमुद्भूतकोलाहलसमन्वितम् ।
उत्थानसमवे(ग)स्तु रोषरञ्जितलोचन ॥ ६२७ ॥

प्रसारितैरतिस्तब्धैर्निःशङ्कं कर्णपल्लवैः ।
यो भिनत्ति हि वेगेन स भवेत् सत्ववान् गजः ॥ ६२८ ॥

शार्दूलादीनि सत्वानि त्रासवर्जितमानसः ।
कृतकं च तथा नागं यो भिनत्त्युत्तमो हि सः ॥ ६२९ ॥

दावानलशिखाश्रेणीशब्दसन्त्रासवर्जितः ।
वनेषु विचरेद्यस्तु स सत्वसहितो गजः ॥ ६३० ॥

कृतशब्दो बलाद्यस्तु वरारोहेण नीयते ।
संकुचन्विमना दीनो मन्दान्मन्दतरो भवेत् ॥ ६३१ ॥

आलोकयति पार्श्वाणि चीत्कारकरणप्रियः ।
नालोकयति हीनाभ्यां लोचनाभ्यां प्रतिद्विपम् ॥ ६३२ ॥

पदात्यश्वसमूहं च ज्वलन्तमिव मन्यते ।
अधमस्तु स विज्ञेयो गजः संग्रामवर्जितः ॥ ६३३ ॥

यस्तु संघट्टयेन्मन्दं घटितश्चापसर्पति ।
तथोपसर्प्य वेगेन दन्तघातान्प्रयोजयेत् ॥ ६३४ ॥

किञ्चिदग्रमुखो भूत्वा कृतसीत्कारनिस्वनः ।
कुरुते दन्तसंघट्टं ससत्वः स च कीर्तितः ॥ ६३५ ॥

रूपवान्बलसंपन्नो विन्ध्याचलसमप्रभः ।
जायते हीनसत्वस्तु कुञ्जरो येन हेतुना ॥ ६३६ ॥

येन वा रूपहीनोऽपि महोत्साहविवर्जितः ।
सत्ववान् जायते नागः एतदाख्यायतेऽधुना ॥ ६३७ ॥

यथा जातकयोगेन जन्तूनां च शुभावहम् ।
तथा बन्धनकालोत्थं गजानामपि जायते ॥ ६३८ ॥

सुलग्ने च स्थितैस्सौख्यैर्ग्रहैः पीडाविवर्जितैः ।
बन्धनं यस्य जायेत स भवेत्सत्त्ववान् गजः ॥ ६३९ ॥

स्त्रीनक्षत्रैश्च गृह्यन्ते ये गजाः क्रूरदृष्टिभिः ।
समालोकितनक्षत्रास्ते भवन्ति भयालवः ॥ ६४० ॥

मृतं सत्त्वं न गृह्णाति मूत्रादीन्न च जिघ्रति ।
यः कुञ्जरः स विज्ञेयो देवसत्त्वः शुभप्रदः ॥ ६४१ ॥

यो गजो मृतसत्त्वं च मूत्रादीनि च जिघ्रति ।
पिशाचसत्त्वो विज्ञेयो गजो गजविचक्षणैः ॥ ६४२ ॥

एवमुक्तप्रकारैस्तु ज्ञात्वा सर्वाधिकान्गजान् ।
दन्तघातेषु कुशलान् कारयेद्युद्धपण्डितान् ।
धनुर्वेदादिकैः शास्त्रैर्नरा युद्धविशारदाः ॥ ६४३ ॥

यथा नरसहस्राणि घ्नन्ति संग्रामभूमिषु ।
तथा शिक्षावशान्नागाः कुशला युद्धकर्मणि ॥ ६४४ ॥

परानीकेभवृन्दानां कुर्वन्ति बलनाशनम् ।
बलसत्त्वगुरुत्वादिगुणयुक्तोऽपि वारणः ॥ ६४५ ॥

दन्तघातान्न जानाति यो रणे निष्फलो हि सः ।
संघातश्च तथा लेखः परिलेखस्तथैव च ॥ ६४६ ॥

कर्तरीतलघातश्च पार्श्वघातस्तथैव च ।
आराघातश्च शूची च ताडकस्तद्धतस्तथा ॥ ६४७ ॥

मर्दश्च परिघावर्तो दन्तघाताः प्रकीर्तिताः ।
तलघातस्तु दन्ताधःक्रियते यो मुखेऽपि वा ॥ ६४८ ॥

पार्श्वघातः स विज्ञेयो यमृतेन न युज्यते ।
आराघातस्तु दन्ताभ्यां संमुखाभ्यां सुलक्षकः ॥ ६४९ ॥

मुखो विषाणपातानां प्रतिमातङ्गदारकः ।
प्रतीक्ष्य प्रतिघातश्च दन्तेनैकेन यो भवेत् ॥ ६५० ॥

करमध्यप्रदेशे तु शूचीघातः स उच्यते ।
अन्योन्यदन्तसंघट्टजनितस्ताडको भवेत् ॥ ६५१ ॥

एतेषां च समायोगे यो भवेन्मिश्रलक्षणः ।
दन्तघातस्तु नागानां मर्दितस्सोऽभिधीयते ॥ ६५२ ॥

परिवृत्य गजो वेगात्पार्श्वे यः कुरुते दृढम् ।
दन्तघातं द्विपस्याथ परिवर्तस्स उच्यते ।
कुलक्रमागतो धीमान्गजकर्मविशारदः ॥ ६५३ ॥

वाहने पालने दक्षो वेदनेषु च लक्षणः ।
ढौकयेत्तं कृतोत्साहं परिवृत्य पुनः पुनः ॥ ६५४ ॥

एवमभ्यस्तघातस्य कुञ्जरस्य महारणे ।
मदक्लिन्नकपोलस्य प्रतिरोधं करोति यः ॥ ६५५ ॥

सद्रत्नैश्चामरैश्चापि न तथा जायते रुचिः ।
मन्दपट्टकृता शोभा यथा भवति दन्तिनः ॥ ६५६ ॥

कफमेदःपित्तरक्तमांसैरन्योन्यमूर्च्छितैः ।
ईश्वरेण परामृष्टो जायते दन्तिनां मदः ॥ ६५७ ॥

कटमेढ्रमुखाक्षिभ्यो मदोद्भवदशासु च ।
पितुर्मदानुरूपेण मदोऽयं भवति ध्रुवम् ॥ ६५८ ॥

पञ्चाशतं दानवहाः शिराः कुञ्जरगा मताः (?) ।
दश चक्षुर्गतास्तत्र दश गण्डस्थलानुगाः ॥ ६५९ ॥

मेहनस्थाः पञ्चदश मुखे पञ्चदश स्मृताः ।
शौर्यादभिजनाद्धर्षात्परिणामान्निसर्गतः ॥ ६६० ॥

सन्तापात्गश्चिता व्याधेरुपधानाच्च माद्यति (?) ।
प्रतिकुञ्जरसंग्रामबलहर्षोद्भवः शुभः ।
सदा भवति नागानां तापादिजनितोऽशुभः ॥ ६६१ ॥

सप्तच्छदेन चूतेन केतकीकुसुमेन च ।
नीलोत्पलेन पद्मेन तथा मलयजेन च ॥ ६६२ ॥

एलयागुरुणा चैव समानसुरभिर्यदा ।
भवेन्मदो गजेन्द्राणां तदा शुभकरः स्मृतः ॥ ६६३ ॥

विण्मूत्ररक्तलशुनस्वेदशुक्रादिसंभवैः ।
गन्धैस्सदृशगन्धश्चेत् मदोऽशुभकरः स्मृतः ॥ ६६४ ॥

दक्षगण्डोद्गतं दानं राज्ञः पुष्टिं प्रयच्छति ।
तच्च वामोद्गतं पातुर्विशेषसुखदं भवेत् ॥ ६६५ ॥

गण्डद्वयाद्यदा दानमेकदा निर्गतं भवेत् ।
विषयस्य समग्रस्य सस्यवृद्धिकरं स्मृतम् ॥ ६६६ ॥

सुरभीकृतनिश्वासः किंचिच्चाताम्रलोचनः ।
घर्षणाकंप्रहस्ताग्रः संपूर्णकटमण्डलः ॥ ६६७ ॥

स्तम्भपीडाकरः कण्ठकुम्भाभ्यां स्तोकजृम्भणः ।
क्वचित्प्रसन्नो भवति निरतो मेढ्लम्बने ।
रूपगन्धरसानां हि विषये मुक्तनिस्वनः ॥ ६६८ ॥

स्वच्छन्दगश्च मातङ्गो भवत्यासन्नदानवान् ।
दानाभिमुखनागस्तु भवेद्बहुविकारवान् ॥ ६६९ ॥

मृगे मन्दे च भद्रे च मदावस्था जयावहाः ।
त्रिपञ्चसप्तविख्याताः संभवन्ति क्रमेण हि ॥ ६७० ॥

अन्धो रोमाञ्चितकटः कटाघ्राणपरायणः ।
विमुक्तरोषी विज्ञेय आद्यावस्थां गजः श्रितः ॥ ६७१ ॥

शीकरोद्गिरणाकंपिकरः कारणरोषवान् ।
गण्डोद्गतमदो ज्ञेयो द्वितीयावस्थको गजः ॥ ६७२ ॥

कटमेढ्रकराप्रान्तफीतसामोददानवान् ।
मदजृम्भादिनोपेतः तृतीयावस्थको गजः ॥ ६७३ ॥

सत्वशक्तिगुणोपेतो मदामोदितदिङ्मुखः ।
प्रत्यर्थिकुञ्जरं दृष्ट्वा सरोषः शीलसंयुतः ॥ ६७४ ॥

स्त्रीबालवृद्धभृत्यादि भवनोद्धाररक्षकः ।
प्राप्यावस्थां चतुर्थीं तु राजयोग्यो भवेद्द्विपः ।
दानधारातिरेकेण तीव्ररोषोऽतिवेगवान् ॥ ६७५ ॥

करदन्तपदाघातैश्चतुरङ्गविनाशनः ।
अंकुशस्य वशेनैव दुर्वृत्तोऽति[प्र]धावति ॥ ६७६ ॥

अवस्थां पञ्चमीं प्राप्तो वर्जनीयो मतङ्गजः ।
टंकारगजघण्टाश्वखुरकोलाहलस्वनम् ॥ ६७७ ॥

नवाम्बुधरनादं च श्रुत्वा कोपेन धावति ।
अपि स्यात्कुशघातानां भ्रमः प्राकारभञ्जनः(?) ॥ ६७८ ॥

कराङ्घ्रिचू(र्णित)र्णकरसोऽवस्थां षष्ठीं गतो गजः ।
करास्यकटदृङ्नेत्र मदसंसिक्तभूतलः ॥ ६७९ ॥

संग्रामे शरसंघातसंपातसहनक्षमः ।
करोररक्तनयनः प्रतिकुञ्जरदारणः ॥ ६८० ॥

न शृणोति न जा(ना)यति सर्वसत्वकृतं भयम् ।
न पश्यति तथा सत्वयुक्तोऽत्यन्तं प्रधावति ॥ ६८१ ॥

पवनाघातमुखरं रूक्षदावहुताशनम्(?) ।
गन्धं तस्य समाघ्राय गजा यान्ति दिगन्तरम् ।
एवं गजानां दुर्धर्षः सप्तम्यां समुपस्थितः ॥ ६८२ ॥

मदावस्था तु या षष्ठी पञ्चमी च चतुर्थ्यपि ।
अक्रमापि भवेत्सत्ववतां बलविशेषतः ॥ ६८३ ॥

भद्रादीनां मदावस्था विज्ञेया मिश्रदन्तिनाम् ।
मदाधिकारे संप्रोक्तं बृहस्पतिमते यथा ॥ ६८४ ॥

यथावर्णितमस्माभिः तदेतच्च परीक्ष्यते ।
मदोद्वहा यदा नाड्यः कटमेढ्रमुखाक्षिगाः ॥ ६८५ ॥

अवस्थावर्णने कस्मादुच्यते करतो मदः ।
वायुना कटमेढ्रेभ्यः खेभ्यश्चास्य प्रसर्पति ॥ ६८६ ॥

पालकाप्येन मुनिना कथमेवं च वर्णितम् ।
मदोद्वहानां नाडीनां सर्वच्छिद्रेष्वसंभवात् ॥ ६८७ ॥

कुञ्जरेण प्रभिन्नेन सप्तधा स्रवता मदम् ।
इत्युवाच कथं व्यासो भगवान् भीष्मपर्वणि ॥ ६८८ ॥

कटमेढ्रमुखाक्षिभ्यः चतुर्भ्यो मद(सं)भवात् ।
कटौ द्वौ च तथा चक्षुर्द्वयं षट्सु तथापि हि ।
अत्र ब्रूमो मुखगता नाड्य एव मुखे करे ॥ ६८९ ॥

उभयत्र स्रावयति मार्गसत्वान्मदाम्बु तत् ।
सामान्योक्ते विशेषेषूपसंहारस्तथैव च ॥ ६९० ॥

बृहस्पतिमते प्रोक्तविशेषे पर्यवस्यति ।
पालकाप्यमुनेर्वाक्यं सामान्यं न विरुद्ध्यते ॥ ६९१ ॥

सप्तधेति व्यासवाक्यमपि नैव विरुद्ध्यते ।
पूर्वोक्तस्थानषट्केषु करस्यापि प्रवेशनात् ॥ ६९२ ॥

करेऽपि नासामार्गेण मदाम्बुस्रवणं यतः ।
ततो गण्डद्वयं चक्षुर्द्वयं नासीद्वयं तथा ॥ ६९३ ॥

मुखमेढ्रद्वयं स्थानान्यष्टा[वे]व च दन्तिनाम् ।
मदस्येति वयं ब्रूमः सप्तत्वं तु कटे(कु)कतः ॥ ६९४ ॥

सप्तावस्था प्रभेदेन दन्तिनां मदसम्भवात् ।
सप्तधावाक्यमूले वा वेदव्यासेन धीमता ॥ ६९५ ॥

ऋतौ यस्मिन्मदं यस्तु परिगृह्णाति वारणः ।
स पुनर्दानयुक्तो हि तस्मिन्नेव भवेदृतौ ।
स्थैर्यं धैर्यं बलं वेगः क्षुत्पिपासासहिष्णुता ॥ ६९६ ॥

हर्षस्सहिष्णुता सत्वं भवेद्दानेन दन्तिनः ।
भूयो मुखं कंपयति भूमिं चाघ्राय कंपति ॥ ६९७ ॥

## ॥ पुष्करम् ॥

क्षिपदूर्ध्वं रशनया सञ्चालयति रक्रणिम् ।
अङ्गुलिं पुष्कराग्रेण संपीड्य निमिताननः ॥ ६९८ ॥

निश्वसत्यनिशं कुर्यात्कर्णकण्डूयनं तथा ।
तिर्यग्वशी भवेत्स्थित्वा क्षणं मुद्रितलोचनः ॥ ६९९ ॥

उन्नामितकरप्रान्तः स्वच्छन्दं क्वापि गच्छति ।
व्यावृत्तवदनो हृष्टो बन्धस्तम्भे प्रदीव्यति ॥ ७०० ॥

दन्तस्य मध्ये संवेष्ट्य करं धावति मत्सरी ।
नाशयेत्कोपकृण्मूत्रं किञ्चिन्मेढ्रं प्रदर्श्य वै ॥ ७०१ ॥

कटं जिघ्रति हस्तेन जलपूर्णघनस्वनः ।
वेणुघातादिसहनो हस्तिनोलालसस्तथा ॥ ७०२ ॥

रमते पांसुविक्षेपे भूयःकर्दममर्दिने ।
तथावगाहनादौ च चतुरङ्गविनाशने ॥ ७०३ ॥

एवंविधस्वभावः स्यात्कुञ्जरोमदपो[यो]गतः ।
ये गुणा गजशास्त्रोक्ता गजानां सर्वं एव ते ॥ ७०४ ॥

आसादितमदं नागं भजन्ते पूर्वसंस्थिताः ।
पूर्वस्थिता आपि गुणा मदयोगान्मतङ्गजे ॥ ७०५ ॥

वर्धन्ते चन्द्रकिरणै स्समुद्रस्योर्मयो यथा ।
उल्कानलप्रतापेन मतङ्गजविघातनात् ॥ ७०६ ॥

दवाग्नियोगाद्व्याघ्रादिभीतेः कुत्सितभोजनात् ।
अतिदूराध्वगमनात्तथा बन्धनदोषतः ॥ ७०७ ॥

क्षुत्तृषापीडनाच्चापि मदो नश्यति दन्तिनाम् ।
रक्तच्छायाविनिर्मुक्तो लोचको निम्नदण्डधृक् ॥ ७०८ ॥

येभ्यः कुप्यति सत्वेभ्यः तेभ्यश्शङ्कां करोति च ।
रूक्षच्छायो निश्चलास्यो नैव स्पृशति धेनुकाम् ॥ ७०९ ॥

नैव संक्रीडते स्त(म्बे)म्भे गण्डं नैवावजिघ्रति ।
कर्णे कटे च हस्ते च कुरुते नैव घर्षणम् ।
मदमूत्रपुरीषाणि वारणानां न जिघ्रति ॥ ७१० ॥

समभ्येति वशं पातुर्निद्रालुरलसान्वितः ।
महा(दा)वरोहिमातङ्गचिह्नान्येवं भवन्ति हि ॥ ७११ ॥

अथ साग्रामिकान् ब्रूमो युद्धयोग्यान् महागजान् ।
अतः संपूर्णकण्ठश्च शिखिपिङ्गललोचनः ॥ ७१२ ॥

घनमांसचिताङ्गस्तु स्तम्भप्राणेन(च)तत्परः(?) ।
वराहजघनश्चैव सुविषाणकराननः ॥ ७१३ ॥

सुप्रतिष्ठितपादस्तु यो भवेद्रुरुमक्षिकः ।
प्राजापत्यो गजो ह्येष संग्रामार्हः प्रकीर्त्तितः ॥ ७१४ ॥

मधुपिङ्गलदन्तो यः किञ्चिचापिङ्गलच्छविः ।
रोमाणि चैकजातानि मुखं च कमलप्रभम् ॥ ७१५ ॥

रक्तोत्पलदलच्छाये सूक्ष्मे तीक्ष्णे च लोचने ।
ऐन्द्रो गजस्स विज्ञेयः शत्रुवृन्दविमर्दनः ।
ताम्रतालुकजिह्वोष्ठसुता च निबिडापरः ॥ ७१६ ॥

आयतेम(ना)नुवृत्तेन करेण मुखशोभिना ।
पीयूषपिङ्गदन्तस्तु गजः कौबेर उच्यते ॥ ७१७ ॥

तरुणाम्बुदसंकाशो घृतप्रभविषाणधृक् ।
संपूर्णकण्ठपादस्तु संपूर्णासनमस्तकः ॥ ७१८ ॥

मृदङ्गध्वनिगम्भीरनादपूरितदिङ्मुखः ।
आयतेन च हस्तेन शीकरोद्गिरणप्रियः ॥ ७१९ ॥

वारुणोऽयं गजस्तावत्संग्रामेष्वतिपूजितः ।
कण्ठस्त्रिबलिसंयुक्तो हस्तिनो यस्य दृश्यते ॥ ७२० ॥

लोचने चातिपिङ्गे च दन्तौ केतकसप्रभौ ।
पादौ च बलिनौ स्थूलौ पीनगात्रसमाश्रितौ ॥ ७२१ ॥

पृथुलौ बिन्दुचित्रौ च कर्णौ चाताम्रपल्लवौ ।
कौमारस्स गजः श्रेष्ठो रणकर्मणि पूज्यते ॥ ७२२ ॥

ताल्वन्युरसि वक्त्रे च पक्षयोरुभयोरपि ।
आताम्रा यस्य दृश्येत च्छाया मृदुतनूरुहा ॥ ७२३ ॥

पेचके कोष्ठमध्ये च पक्ष्ममध्ये च नित्यशः ।
यस्तु सौम्यस्स विज्ञेयः कुञ्जरस्समरोचितः ।
अतिपिङ्गलरोमा यः केशैर्वालैश्च पिङ्गलैः ॥ ७२४ ॥

पिङ्गलाक्षिविषाणैश्च रक्तपुष्करतालुकः ।
आग्नेयस्सगजो ज्ञेयस्तेजसाग्निसमो भवेत् ॥ ७२५ ॥

राज्ञा वृ(ऋ)द्धिमता नित्यं कार्यस्समरकर्मणि ।
कृष्णवर्णस्य ताम्राणि मुखश्रोतांसि लोचने ॥ ७२६ ॥

निर्धूमाग्निसमच्छाये विंशतिर्निशिता नखाः ।
कायस्तु पीनमांसस्स्याद्वेगवाजिसमप्रभः ॥ ७२७ ॥

आग्नेयस्सोऽपि मन्तव्यो गजस्संग्रामदुर्जयः ।
अन्ये वायवमिच्छन्ति तं गजं शास्त्रकोविदाः ॥ ७२८ ॥

वाय्वग्न्यङ्गोद्भवं त्वन्ये तमिच्छन्ति महागजम् ।
स संग्रामे प्रयुक्तस्तु नाशयेद्रिपुवाहिनीम् ॥ ७२९ ॥

निरङ्कुशत्वं चण्डत्वं तस्य दोषद्वयं भवेत् ।
निरङ्कुशत्वं निर्याणप्रलेपैः प्रशमं नयेत् ।
चण्डत्वं च यथानित्यं सुकुमारक्रियादिभिः ॥ ७३० ॥

शो(सी)रचक्रगदावज्रधनुर्निस्त्रिंशसन्निभैः ।
बिन्दुभिश्चित्रितं यस्य मुखं चित्रस्त्वसौ गजः ॥ ७३१ ॥

तेन संग्रामकर्माणि कुरुते यो नराधिपः ।
नित्यं तु विजयस्तस्य स्वाराज्यफलमश्नुते ॥ ७३२ ॥

सुदन्तो दीर्घहस्तश्च बृहदङ्गुलिपुष्करः ।
घनमांसशरीरश्च कूर्माकाराङ्घ्रिसुक्रमः ॥ ७३३ ॥

सांग्रामिको गजो ह्येष जिह्वयापि समाशतम् ? ।
महाबल इति ख्यातः प्रतापजननक्षमः ॥ ७३४ ॥

महाशिरा महाकायो महामेढ्रो महाकरः ।
महादन्तोदरश्चैव महागात्रापरासनः ॥ ७३५ ॥

मणिनेत्रो महोष्ठश्च महाकर्णो महामुखः ।
महाकण्ठो महापादो भवेत् सांग्रामिको गजः ॥ ७३६ ॥

पीनमांससमाङ्गस्तु सुवृत्तजघनापर ।
छागकुक्षिः सुपार्श्वश्च कण्ठनाहसमन्वितः ॥ ७३७ ॥

ज्वलनोज्ज्वलनेत्रश्च सुविषाणो महाकरः ।
संपूर्णचिबुकश्चैव कूर्मपादो जवान्वितः ।
बलसत्वसमायुक्त स्निग्धच्छविमनोरमः ॥ ७३८ ॥

सांग्रामिको भवेद्राज्ञस्त्वभिषेकोचितो गजः ।
गजस्त्वेकादशगुणः कथ्यते मुनिसंमतः ॥ ७३९ ॥

मधुसन्निभदन्तश्च श्यामो मधुनिभेक्षणः ।
उदरे पाण्डुवर्णश्च वक्त्रे च कमलप्रभः ॥ ७४० ॥

द्विरेफसमवालश्च कुन्देन्दुसदृशैर्नखैः ।
चूतपल्लवमेढ्रश्च शेषैरङ्गैश्च पीतकः ॥ ७४१ ॥

विचित्रितं मुखं यस्य रक्तै श्लक्ष्णैश्च बिन्दुभिः ।
स नागो नागयूथानां मध्ये रोद्धा तु जायते ॥ ७४२ ॥

तं प्राप्य नृपतिः भुङ्क्ते सागरान्तं महीतलम् ।
अथ सांग्रामिकान् ब्रूमो गजान् दृष्टा कुलक्षणा[न्] ॥ ७४३ ॥

भू[मीभु]जा परित्या(गा)ज्यान् गजशास्त्रेषु भाषितान् ।
यस्य दन्तावतिस्थूलौ ह्रस्वौ रूक्षौ च मांसलः ॥ ७४४ ॥

हस्तश्च चिबुकं मांसं युक्तस्थूले च तारके ।
स्थूलं मुखं स दुष्टात्मा नासौ सांग्रामिको गजः ।
अत्यन्तदुष्टचरितो वर्जनीयो भयालुकः ॥ ७४५ ॥

कर्णदन्तौ समौ यस्य मानेन स गजस्सदा ।
करोति समरेष्वस्य चतुरङ्गविनाशनम् ॥ ७४६ ॥

गच्छत्येव विचित्राणि गात्रे रोमाणि यस्य हि ।
स गजः प्रतिनागस्य भीत्या श(स्व)बलनाशकृत् ॥ ७४७ ॥

मुखे मेढ्रे(च)हस्ते च कर्णोदरशिरस्सु च ।
कौष्ठाकारैः कषायैस्तु पृथुलैर्बिन्दुमण्डलैः ॥ ७४८ ॥

शबलैश्च युतो यश्च विलासः सोऽभिधीयते ।
किलासवर्णे संस्थानगजो गजविनाशनः ॥ ७४९ ॥

ह्रस्वांगुलीवालखरः कर्णापरशरीरधृक् ।
आनाहायाम[सं]युक्तः सोच्छ्रायोऽत्यन्तकोपनः ॥ ७५० ॥

महाशिरा वामनामो यदि युद्धप्रियो गजः ।
राज्ञा तथापि संत्याज्यो लक्षणैः परिवर्जितः ।
काकवत्कृष्णनयनो ह्रस्वापरशरीरधृक् ॥ ७५१ ॥

अधोमुखस्थूलरूक्षदन्तयुग्मो बृहन्मुखः ।
बहिर्मुखः प्रस्फुटितः पादोद्दष्टो बृहन्नखः ॥ ७५२ ॥

स्थूलपुष्करहस्तश्च वामनोऽयं गजाधमः ।
वलितास्यो ह्रस्वतनुस्त्वनिलम्बितपेचकः ॥ ७५३ ॥

अधोमुखः स्थूलरदो दुष्टो विषममस्तकः ।
स्तब्धवक्त्रः स्तब्धगात्रस्तब्धरोमा निरङ्कुशः ॥ ७५४ ॥

महाशिरा महास्कन्धः पक्ष्मान्तरिततारकः ।
कषायवर्णवृषणः स्तब्धकर्णयुगस्तथा ॥ ७५५ ॥

असंग्राह्यो गजो राज्ञा व्यालोऽयमतिगर्हितः ।
अतिदीर्घविषाणाभ्यां विनाशितमुखद्युतिः ॥ ७५६ ॥

पृथुलम्बोदरः स्थूलपादो भस्माभदन्तधृक् ।
स्थूलास्थिकोलजघनः श्यावास्यो वक्रपुच्छधृक् ॥ ७५७ ॥

कृष्णोवकीलको नाम व्यालोऽयं सर्वदोषधृक् ।
वदनं यस्य नागस्य मांसपूर्णमधोगतम् ॥ ७५८ ॥

ह्रस्वांगुलिकरो देहो मांसलस्स्थूललोचनः ।
निर्याणे चातिकठिने कर्णौ ह्रस्वौ च मण्डलौ ।
सर्परूपमुखो व्यालो ह्रस्वो दुष्टोऽतिगर्हितः ॥ ७५९ ॥

यावदुत्थाय शयनात् कृच्छ्रेण परिवर्तते ।
वाजति स्र(श्र)वसी नेत्रं पापो निभृतदेहधृक् ॥ ७६० ॥

याति प्रत्युषसि क्वापि यस्समुन्नमिताननः ।
ज्ञेयो वातकरी नाम सर्वदोषकरो गजः ॥ ७६१ ॥

यस्य सुप्तोत्थिते तस्य मुखाद्रक्तजलस्रवः ।
प्रपातोऽग्निकणानां वा भर्तृघाती स राक्षसः ॥ ७६२ ॥

नयनव्याधिमुक्तस्य यस्य नागस्य नेत्रजम् ।
जलं स्रवति नित्यं हि भर्तुस्तस्य रतोमृदुः? ॥ ७६३ ॥

नखानि नयने जिह्वा लपनं मेहनं तथा ।
देहस्य यस्य कृष्णानि तस्य भर्तुःक्षयं ध्रुवम् ॥ ७६४ ॥

करकर्णशिरःपुच्छदन्तगात्राणि दन्तिनः ।
न्यूनाधिकानि यस्य स्युः स पापः स्वामिनाशकः ॥ ७६५ ॥

खरदग्धस्तनुस्तब्धैः कुलत्थच्छायरोमभिः ।
चालयित्वा पातयति दुष्टात्मा त्याज्य एव सः ।
आयामहीनो नम्रास्यः समानाहोच्छ्रयस्तथा ॥ ७६६ ॥

उच्चवंशश्च कुब्जश्च हीनमूर्धा समासनः ।
एवं भूतो गजो राज्ञा त्याज्यो यत्नेन धीमता ॥ ७६७ ॥

यो मन्दधीस्तं गृह्णाति कुलं तस्य क्षयं व्रजेत् ।
मञ्जिष्ठांशुकसंकाश कपिसंकाशलोचनः ॥ ७६८ ॥

निकृष्टाङ्गकरी त्याज्यः पापात्माऽयं दुराशयः ।
यत्र देशे निवसति दिनमेकमपि द्विजः ॥ ७६९ ॥

तं देशं यावतः क्षिप्रं भस्मसात्कुरुते यतः ।
तस्मादयं शत्रुराष्ट्रोदरे विन्ध्यवनेऽथवा ॥ ७७० ॥

मोक्तव्योऽतिप्रयत्नेन भूभुजा शुभमिच्छता ।
हीनकर्णकरो हीनवालो हीननखस्तथा ॥ ७७१ ॥

मञ्जिष्ठया लाक्षया च सवर्णो वातिलोमशः ।
स नागः पूतनो नाम यत्र देशेऽवतिष्ठते ॥ ७७२ ॥

विनाशयति तं देशं शस्त्रदुर्भिक्षवह्निभिः ।
हरिद्वर्णः कालनखः हर्यक्षो ह्रस्ववालधिः ।
बहुपक्ष्मा च दुर्गन्धी मसीमद्दशतालुकः ॥ ७७३ ॥

रूक्षो भवति यो नागः सोऽनेकास्त्रकृतव्रणः ।
निवर्तते म्रियते वा तस्माद्वर्ज्यतमो हि सः ॥ ७७४ ॥

कर्कशः श्यामलच्छायः काकजंघो दुराशयः ।
निश्शेषं हि कराग्रेण कुरुते भूमिताडनम् ॥ ७७५ ॥

कुर्यान्निश्शेषशब्दं यो हस्तनि(षे)[क्षेप]संज्ञकः
स गजः परिहर्तव्यो राज्ञा यत्नेन धीमता ॥ ७७६ ॥

कर्णौ तनुत्वचौ ह्रस्वौ नखाश्च जनितान्तराः ।
निरन्तमणिपद्मानि सूक्ष्माणि विषमाणि च ॥ ७७७ ॥

ह्रस्वाङ्गुलिर्ह्रस्वहस्तो ह्रस्वकीलालमेहनः ।
यस्य गात्रापरं दीर्घमुत्कृष्टमुदरं भवेत् ॥ ७७८ ॥

स वै द्विपो दुष्टगजस्त्याज्योऽयं भूभुजा सदा ।
विधूयास्यं प्रसार्यास्यं यः पातयति हस्तिपम् ॥ ७७९ ॥

जले स्थले च दुष्टात्मा स त्याज्यो वारणाधमः ।
तिर्यक्प्रेक्षी पूतिमुखो विण्मूत्राघ्राणतत्परः ।
कालकुम्भं(म्भः) च नागोऽयं त्याज्यश्चण्डालसंज्ञकः ॥ ७८० ॥

करालौ यस्य वदनौ ह्रस्वगात्रापरं शिरः ।
निम्नपक्षः संकटं च त्याज्योऽसौ दुर्भगः करी ॥ ७८१ ॥

दीर्घाननः कृष्णचक्षुरधोमुखतनूरुहः ।
शिरापकृष्टश्रवणस्त्याज्योऽयं गक्षमो गजः ॥ ७८२ ॥

स्तब्धोऽतिरक्तपक्ष्मा च ध्यानंनिष्ठोऽतिशब्दधृक् ।
कराग्रं द्विगुणीकृत्य संक्रीडयति भूतले ॥ ७८३ ॥

महीं खनति वामेन कुञ्चिताग्रेण योऽङ्घ्रिणा ।
रूक्षजर्झरकर्णश्च पापोऽसौ त्यज्यते गजः ॥ ७८४ ॥

पादो वाजिशफाकारः पृष्ठं करभपृष्ठवत् ।
मुख वानरवद्यस्य स भवेन्निन्दितो गजः ॥ ७८५ ॥

महाशिरा बृहन्नेत्रो हीनमत्वतनूरुह ।
नपुंमको नाम गजस्त्याज्योऽयं समरे सदा ॥ ७८६ ॥

स्वभावेनैकरदनो मातङ्गो योऽभिजायते ।
अप्रशस्तः परित्याज्यो भूभुजा भूतिमिच्छता ।
कुलीनो रूपयुक्तोऽपि यदि स्याद्गर्भदोषजः ॥ ७८७ ॥

अजातदन्तस्त्याज्योऽयं मत्कुणाख्यो गजो नृपैः ।
सत्वं बलं तथा वेगं गजमध्यगतो यतः ॥ ७८८ ॥

कुञ्जराणां हरत्याशु ततोऽयं त्यज्यते नृपैः ।
हस्तिनीष्वविरुद्धैश्च व्यालादीनां कुलक्षणैः ॥ ७८९ ॥

लक्षिता करिणी या स्यात्तत्तत्फलकरी हि सा ।
पीना निर्गतदन्ता च ह्रस्वग्रीवा बृहच्छिराः ॥ ७९० ॥

स्थूलायतेन हस्तेन युक्ता कुञ्जरसंस्थितिः ।
या हस्तिनी भवेदेवं तां तु स्वामिविनाशिनीम् ॥ ७९१ ॥

निर्वासयेत्प्रयत्नेन स्वदेशादवनीपतिः ।
कुब्जः काणस्तथा खञ्जः खर्वो वृद्धः शिशुस्तथा ॥ ७९२ ॥

विकृताङ्गोऽधिकाङ्गश्च हीनाङ्गो व्याधिपीडितः ।
कुष्ठी सत्वविहीनश्च तथैवातिविमूढधीः ।
नैतांश्च राजाधिरोहेत्तन्निराधानममन्त्रवित् ? ॥ ७९३ ॥

युवराजोनवामुखाः सर्वेऽप्येते हि निन्दिताः ।
करिणोऽपि तथा कुब्जाः काणाः खञ्जादिकास्तथा (?) ॥ ७९४ ॥

कुब्जादिकरिवद्धेया गजशास्त्रविशारदैः ।
गजानामथ वक्तव्यमायुर्लक्षणमुत्तमम् ॥ ७९५ ॥

आभ्यन्तरं च बाह्यं च लक्षणं द्विविधं स्मृतम् ।
आभ्यन्तरं योगिसाध्यं बाह्यं किञ्चिच्च लक्ष्यते ॥ ७९६ ॥

तेनान्तरं परित्यज्य बाह्यं लक्षणमुच्यते ।
देहावयवसंस्थानि क्षेत्राणि दश दन्तिनाम् ॥ ७९७ ॥

छायासत्वसमायोगाद्भवन्ति द्वादशैव हि ।
एकं[कर]गतं [तत्र] द्वितीयं वदनाश्रितम् ।
तृतीयं च विषाणस्थं चतुर्थं शिरसि स्थितम् ॥ ७९८ ॥

पञ्चमं नयनस्थं हि षष्ठं कर्णाश्रितं भवेत् ।
कण्ठस्थं सप्तमं ज्ञेयं अष्टमं गात्रसंस्थितम् ॥ ७९९ ॥

नवमं चोरसि ज्ञेयं शेषाङ्गस्थं द्विपञ्चकम् ।
एकादशं तु कान्तिस्थं द्वादशं सत्वसंस्थितम् ॥ ८०० ॥

क्षेत्राणि द्वादशानीह मातङ्गानां भवन्ति हि ।
द्वादशैकादशो ज्ञेया दशवर्षाणि लक्षिताः ? ॥ ८०१ ॥

विंशसंवत्सरशतं भद्रस्यायुः प्रकीर्त्तितम् ।
अ(य)द्वा अशीति[:]म(न्दं)लस्य चत्वारिंशन्मृगस्य हि ॥ ८०२ ॥

मिश्रस्याप्यायुषः संख्या भद्राद्यङ्गादियोगतः ।
प्रदेशज्ञानतत्वज्ञो जातिं समुपलक्षयेत् ॥ ८०३ ॥

सर्वैः क्षैत्रैश्च संपूर्णैः संपूर्णायुर्गजो भवेत् ।
हीनैरायुः प्रहीयेत यथावत्प्रतिलक्ष्यते ॥ ८०४ ॥

दशाब्दानां क्षयं कुर्याद्धस्तो लक्षणवर्जितः ।
विंशत्यब्दविनाशस्तु हीने क्षेत्रद्वये भवेत् ॥ ८०५ ॥

क्षेत्रत्रये त्वसंपूर्णे त्रिंशदब्दपरिक्षयः ।
चत्वारिंशत्समानाशो हीने क्षेत्रचतुष्टये ॥ ८०६ ॥

पञ्चाशदब्दा हीयन्ते हीने क्षेत्रे तु पञ्चके ।
षट्क्षेत्रहीनता या तु षष्टिवर्षविनाशनम् ॥ ८०७ ॥

सप्तत्यब्दविनाशाय सप्तक्षेत्रात्वहीनता ।
अशीतिरष्टभिर्हीनैः वर्षाणां च विनश्यति ।
नवतिर्नवभिर्हीनैः क्षेत्रैर्नाशं प्रयाति च ॥ ८०८ ॥

दशभिश्च तथा हीनैर्नश्यत्यब्दशतं ध्रुवम् ।
दशोत्तरं चाब्दशतं हीना च्छाया(?) विनाशयेत् ॥ ८०९ ॥

क्षेत्राणां सर्वनाशेन स्याद्विंशतिशतक्षयः ।
एवं दशाब्दनाशं तु क्षेत्रं कुर्यादलक्षणम् ॥ ८१० ॥

एवमायुः क्षयं विद्याद्गजस्य गजकोविदः ।
भद्रवन्नैव विज्ञेयो न मन्दमृगदन्तिनोः ॥ ८११ ॥

एकक्षेत्रविनाशेन दशाब्दानां परिक्षयः ।
किन्तु द्वादशभागेन विभाज्यायुस्तयोरपि ॥ ८१२ ॥

भागैकस्य क्षयं विद्यादेकक्षेत्रविनाशनम् ।
[सा]मान्यलक्षणं ह्येतत्तज्जीवितपरीक्षणे ।
विशेषलक्षणं तावद्गूह जतिमतं भवेत् ॥ ८१३ ॥

---

इति श्रीमन्महाराजाधिराजगजपतिप्रतापरुद्रदेवस्वहस्तधारित
कनककेसरिचतुष्टयावेष्टितशातकुम्भमयकुम्भसंभृतमेघाडम्ब-
राभिधानसितातपत्रशोभमानकविपुङ्गवपण्डितराज-
राजगुरुवाजपेययाजिमन्त्रिवरगोदावरमिश्र-
विरचितेहरिहरचतुरङ्गे प्रथमो
गजपरिच्छेदः ॥

## ॥ अथ रथपरिच्छेदः ॥



वर्णितश्चतुरङ्गस्य प्रथमाङ्गं गजाभिधम् ।
क्रमप्राप्तं रथाङ्गं च संक्षेपादथ वर्ण्यते ॥ १ ॥

शिल्पिप्रवरनिर्व्यूढा युक्ताः सारथिभिस्तथा ।
सुध्वजास्सुपताकाश्च दृढचक्राः सुरश्मयः ॥ २ ॥

रथयोग्यहयैर्युक्ता रथिनाधिष्ठिता रथाः ।
सांग्रामिकाः शोभमानाः परसैन्यविदारकाः ॥ ३ ॥

समुद्रवलयां पृथ्वीं नृपस्य वशवर्तिनीम् ।
रथिनश्च हितैषी यः पार्थिवस्य तथैव सः ॥ ४ ॥

महारथीति विज्ञेयो ज्ञेया रथकुटुम्बिनः ।
वक्ष्यन्तेऽश्वपरिच्छेदे रथयोग्या हयोत्तमाः ॥ ५ ॥

शस्त्रास्त्रनिपुणानां च रथिनां श्रमशालिनाम् ।
सुसारथिभिरिद्धानां नाशक्यं हि महीतले ॥ ६ ॥

रथिनस्संमुखे स्थातुं नोत्सहन्ते महीहतले ।
प्रावृण्मेघध्वनिनिभं रथघोषं निशम्य च ॥ ७ ॥

पलायते द्रुततरं गजवाजिपदाति यत् ।
सैन्यं गजाश्वबहुलं बहुपत्तिसमाकुलम् ॥ ८ ॥

जगक्षमाणां रथिनां ब्रूमः सोभारतं परम् ।
महारथा यत्र सैन्येऽतिरथा वोभयं च वा (?) ॥ ९ ॥

तत्र देवा अपि स्थातुं नोत्सहन्ते महामृधे ।
रथेनैकेन यः शत्रून् साहंकारोवजत्फलम् (?) ॥ १० ॥

आत्मानं सारथिं चाश्वान् स्वसैन्यं रक्षितुं क्षमः ।
प्रहर्ता परसैन्यानां युद्धशास्त्रविशारदः ॥ ११ ॥

युद्धशास्त्रेषु निपुणैः स रथित्वेन संमतः ।
एको दश सहस्राणि योधयेद्यश्च धन्विनाम् ॥ १२ ॥

पूर्वोक्तलक्षणैर्युक्तः पार्थिवस्यापि रक्षकः ।
महारथीति कथितो युद्धशास्त्रविशारदैः ॥ १३ ॥

अमितान् योधयेद्यश्च पूर्वोक्तगुणसंयुतः ।
विज्ञेयोऽतिरथी नाम्ना शस्त्रास्त्रनिपुणः सदा ॥ १४ ॥

इति श्रीमहाराजाधिराजगजपतिप्रतापरुद्रदेवस्वहस्तधारितकनककेसरि-
चतुष्टयावेष्टितशातकुम्भमयकुम्भसंभृतमेघाडम्बराभिधान-
सितातपत्रशोभमानकविपुङ्गवपण्डितराजगुरु-
वाजपेययाजिमन्त्रिवरगोदावरमिश्रविरचिते
हरिहरचतुरङ्गे द्वितीयो रथपरिच्छेदः ॥

---

## ॥ अथ अश्वलक्षणपरिच्छेदः ॥



वर्णितं चतुरङ्गस्य द्वयमङ्गं गजा रथाः ।
अथाश्वा अपि वर्ण्यन्ते संक्षेपेण यथाश्रुतम् ॥ १ ॥

इह राज्ञां परो धर्मः पृथिव्याः परिपालनम् ।
शक्यं तद्बलिना तच्च बलमग्र्यं तुरङ्गमाः ॥ २ ॥

तस्माद्धर्मार्थकामार्थं पार्थिवैस्स्वार्थवेदिभिः ।
सर्वदा सर्वथा यत्नाद्रक्षणीयास्तुरङ्गमाः ॥ ३ ॥

राज्यग्रहणकामेन नीतिज्ञेन महीभुजा ।
वाजिनो बहवः कार्या यस्याश्वास्तस्य मेदिनी ॥ ४

वेदाश्वशास्त्रतत्वज्ञैः सेव्या धर्मयशोर्थिभिः ।
श्रियं कामयमानेन राज्ञा पोष्यास्तुरङ्गमाः ॥ ५ ॥

सुलक्षणा भृता यस्माल्लक्ष्मीपुत्रास्तुरङ्गमाः ।
अश्वैर्हस्तगता पृथ्वी श्रीरश्वैर्विपुलं यशः ॥ ६ ॥

विजयश्च भवत्यश्वैरश्वा राज्यविभूषणा ।
तस्य राज्यं यशो लक्ष्मीर्धर्मकामार्थसंपदः ॥ ७ ॥

वाजिनो यस्य तिष्ठन्ति सर्वलक्षणसंयुताः ।
सुलक्षणाश्च यस्याश्वा निवसन्ति गृहाजिरे ॥ ८ ॥

विष्णोर्वक्षस्थलं मुक्त्वा लक्ष्मीस्तस्य गृहे चिरम् ।
सुलक्षणा[श्व] सं(घा)हातैर्नगरं यस्य पूर्यते ॥ ९ ॥

तस्य सागरपर्यन्ता हस्ते तिष्ठति मेदिनी ।
शिक्षालक्षणयुक्तेन शूराधिष्ठानशालिना ॥ १० ॥

शक्यमश्वसहस्रेण कृत्स्नां जेतुं वसुन्धराम् ।
नयच्छक्यं गजैर्जेतुं पत्तिभिर्वा प्रहारिभिः ॥ ११ ॥

तत्स्थानं सहसा शक्यं जेतुमश्वैर्बलाधिकैः ।
आशु कार्याणि भूपा(नां) यथाश्वाः पृथिवीतले ॥ १२ ॥

कुर्वन्ति हि तथा शीघ्रं न गजाश्च पदातयः ।
पदातिगजमुख्यैश्च शतशोऽथ सहस्रशः ॥ १३ ॥

वेष्टितोऽपि व्रजत्यश्वो यथेष्टं पक्षिराडिव ।
मृगयायां शीघ्रयाने तथा संग्रामकर्मणि ॥ १४ ॥

अश्वेभ्यः परम नास्ति राज्ञां विजयकारणम् ।
रणाद्यातोऽपि तुरगो देशकालाद्यपेक्षया ।
पुनः प्रतिनिवृत्त्याशु हन्ति शत्रुचमूं रणे ॥ १५ ॥

क्षणादेकत्वमायान्ति क्षणाद्यान्ति सहस्रधा ।
क्षणादेव रिपुं वीक्ष्य नयन्ति यमसादनम् ॥ १६ ॥

गत्वा घ्नन्ति हयारोहाः पुनश्चायान्ति तत्क्षणात् ।
तन्मध्ये तुरगाश्चापि नाश्नन्ति न पिबन्ति च ॥ १७ ॥

दूरदेशान्तरस्थोऽपि रिपुस्तिष्ठति शङ्कितः ।
सुलक्षणा हया यस्य ब्रूमस्त्वेव वयं पुनः ॥ १८ ॥

प्रसङ्गादुच्यतेऽश्वानां समुत्पत्तिः श्रियो यथा ।
यज्ञीयत्वं यथा ते च वाहुकत्वं त(य)था गताः ? ॥ १९ ॥

निवृत्तसकलालोके सिसृक्षोः ब्रह्मणः पुरा ।
वेदोक्तेनैव मार्गेण जुह्वतोऽग्निं विधानतः ॥ २० ॥

आहुत्यां च द्वितीयायामश्वः समभवच्छुभः ।
सुसंस्थानश्च तुपक्षः श्वेतःपरमरूपधृक् ॥ २१ ॥

शुभलक्षणसंयुक्तो दुष्टलक्षणवर्जितः ।
ततः प्रजापतेर्हव्यधूमव्याकुलचक्षुषः ।
अदृष्ट एव सर्गस्य समुत्पेते[दे] मनोजवः ॥ २२ ॥

ततः स भगवान्ब्रह्मा तमश्वं वाक्यमब्रवीत् ।
प्रथमाचक्षुषि क्षिप्रं न यातव्यमिति स्वयम्(?) ॥ २३ ॥

ततः शीघ्रं महामेघमहानागस्वनोपमम् ।
शब्दं कृत्वा स तुरगो बलाद्भूयो दिवं ययौ ॥ २४ ॥

ततस्स भगवान्क्रुद्धः सर्वलोकपितामहः ।
रोषात्सगद्गदां वाणीमुत्सृज्याश्वं न्यवर्तयत् ॥ २५ ॥

ततस्सपतितस्तूर्णं हेषमाणो महोदधौ ।
उक्तोऽत्र तिष्ठ सलिले यावत्कालस्य पर्ययः ॥ २६ ॥

देवासुरैर्मथ्यमाने प्रादुर्भूतो महोदधौ ।
सोऽश्वो महाबलस्तस्मादब्धेरुच्चैश्श्रवाः पुरा ॥ २७ ॥

मेघदुन्दुभिनिर्घोषः शङ्खभेरीमहास्वनः ।
उच्चैश्श्रावयते येन तेन शब्देन नामतः ॥ २८ ॥

उच्चैश्श्रवा इति प्रोक्तस्तेन देवासुरैस्तथा ।
बलिर्दैत्योऽमराश्शोभ्यो जग्राहाश्ववरं तु तम् ।
समुद्रोत्थितरत्नानि सर्वाण्यादातुमिच्छया ॥ २९ ॥

उच्चैश्श्रवसमारुह्य हयं शीघ्रबलान्वितम् ।
सुमहान्त्यप्यनीकानि देवानां निजघान सः ॥ ३० ॥

उत्थायोत्थाय तुमले देवासुरमृधे बलिः ।
ये तु तत्र हता देवैः संग्रामे दैत्यदानवाः ॥ ३१ ॥

अमृतास्ते हयेन्द्रेण संजिजीवुः पुनः पुनः ।
ततस्संमुमुहुर्देवा वध्यमाना महासुरैः ।
ब्रह्माणं संप्रतस्थुस्ते शरण्यं शरणार्थिनः ॥ ३२ ॥

वाहनं दिव्यमस्माकं भगवन्दातुमर्हति ।
वयमप्यसुरान्संख्ये येन सर्वान् जयेम हि ॥ ३३ ॥

तानाह भगवान्ब्रह्मा वाक्यमेतच्च सान्त्वयन् ।
मिसृक्षोर्जुह्वतो वह्निं पुरा दक्षाध्वरे मम ॥ ३४ ॥

प्रादुरासीन्महाधूमः तस्मादश्रूणि जज्ञिरे ।
श्रीस्तानि प्रतिजग्राह पाणिभ्यां हृष्टमानसा ॥ ३५ ॥

ततोऽस्या गात्रसंभूतास्तस्मात्पुत्राः श्रियो मताः ।
तत्र यद्दक्षिणे पाणावश्रु तत्तुरगोऽभवत् ॥ ३६ ॥

वामहस्तेन बडवा शुभसत्त्वजवौजसा ।
श्रियः पाणौ ममाश्रूणि तत्र ते ब्राह्मणा हयाः ॥ ३७ ॥

श्रियश्च तानि पाणिभ्यां यान्यश्रूणि तथा मम ।
स्थितान्युरसि ते ज्ञेयाः क्षत्रिया रणकर्कशाः ॥ ३८ ॥

नाभेरधस्तादूरुभ्यां वैश्याः शूद्रास्तु पादयोः ।
वामपार्श्वे स्त्रियस्तत्र दक्षिणे तुरगाः स्मृताः ॥ ३९ ॥

ततोऽन्यत्तत्समं सर्गाच्चातुर्वर्ण्यं विधीयते ।
ब्राह्मण्यादौ [वि]जातीयवाजियोगात्तु संकराः ॥ ४० ॥

एवमश्वाश्च संभूता वर्णै रेभिर्मनोजवाः ।
शुद्धवर्णानुवर्णाश्च तथा चित्रललामिनः ॥ ४१ ॥

विचित्रबालकेशाः स्युः कल्माषा बिन्दुचित्रिताः ।
शबलाः पुष्पचित्राश्च सिताश्चाञ्जनमूर्धजाः ।
मनोहरा केसरिणः शुभस्निग्धतनूरुहाः ॥ ४२ ॥

चतुर्भिर्गात्रजैः पक्षैः पूरयन्त इवाम्बरम् ।
देवताङ्गमयैरङ्गैः प्रत्यङ्गैश्च महौजसः ॥ ४३ ॥

श्रीमन्तः श्रीयुतास्सत्त्ववन्तश्चाश्रुसमुद्भवाः ।
अग्निसन्तापसंभूतः स्वेदो नाभिसमुद्भवः ॥ ४४ ॥

जगाम भस्म यत्तस्मात्खरी खरमजायत ।
लाङ्गूलिनो दीर्घकर्णा गौरपृष्ठा दृढैः शफैः ॥ ४५ ॥

रूक्षस्वराभरसहाः शीलकर्कशिनःस्वराः ।
उत्पन्ना भस्मतो यस्माद्भस्मवर्णास्तु गर्दभाः ॥ ४६ ॥

एवमुत्पन्नदेहास्ते दक्षस्याश्रमवासिनः ।
क्रीडन्तस्ते ततो दर्पादाग्निहोत्रं स्रुवं स्रुचम् ॥ ४७ ॥

स्थाली कपालं कलशं मोहादध्वंसयन्हयाः ।
तदग्निसदनं दृष्ट्वा दर्भभस्माकुलीकृतम् ॥ ४८ ॥

शशाप तुरगान् दक्षः ततः कोपसमन्वितः ।
पक्षच्छेदं वधं बन्धं भूमिचारित्वमेव च ।
देवानां मानुषाणां च वाहनत्वं गमिष्यथ ॥ ४९ ॥

तच्छ्रुत्वा वचनं ते तु तदा दक्षं तुरङ्गमाः ।
तमेव शरणं जग्मुः चक्रे चानुग्रहं मुनिः ॥ ५० ॥

अश्वमेधहता यज्ञे निहताश्च रणाजिरे ।
विधिवद्दक्षिणा दत्ताः पुण्यान् लोकान्गमिष्यथ ॥ ५१ ॥

दक्षिणानां तथा श्रेष्ठाद्भविष्यन्ति तुरङ्गमाः ।
हृष्टास्तेऽनुग्रहं प्राप्य दक्ष कृत्वा प्रदक्षिणम् ॥ ५२ ॥

प्रणम्य शिरसा वाचमूचु किंकरवामहै ।
आदिदेशाऽथ तान्दक्षो हिमवन्तं निगच्छथ ॥ ५३ ॥

गिरिसानुषु रम्येषु स्रवन्तीषु चरिष्यथ ।
तथेत्युक्त्वा हया जग्मुः प्रहृष्टाः पर्वताधिपम् ॥ ५४ ॥

जगाम हिमवत्पार्श्वे यत्र चाश्वाश्चरन्ति ते ।
तप स्वाध्यायनिरतः शालिहोत्रमहामुनिः ॥ ५५ ॥

स तत्रारचयद्वासं रमणीये गिरिध्वजे ।
नानामृगगणाकीर्णे सिद्धगन्धर्वसेविते ।
प्रमेदिरे तत्र चाश्वा आश्रमेऽतिमनोहरे ॥ ५६ ॥

तान् शालिहोत्रस्तुरगान्पुत्रवत्परिरक्षति ।
आश्रमं शालिहोत्रस्य सुरा गच्छत मा चिरम् ॥ ५७ ॥

तत्र दास्य[ति]त्रो वाहान् शालिहोत्रो महाजवान् ।
एवमुक्तास्सुरश्रेष्ठाः ब्रह्मणा तेऽदितेस्सुताः ॥ ५८ ॥

बाढमित्येव संहृष्टाः प्रस्थितास्ते नगोत्तमम् ।
उपगम्याश्रमस्थं तं शालिहोत्रं महामुनिम् ॥ ५९ ॥

अभ्यवृर्ण्यं[ण्वन्]ततो देवा मनस्संकल्पितान् हयान् ।
श्वेताचलनिभान्सोमः शुकपत्रनिभान् रविः ॥ ६० ॥

हरीनमरराडिन्द्रः कालांश्चैव ततो यमः ।
हुताशन किंशुकाभान् बभ्रून्वक्रे[त्रे]पदागतिः ॥ ६१ ॥

अवृणोन्निर्ऋतिन[र्नी]लान्पाटलांश्च गभस्तिमान् ।
तथा पीतान्वृषाङ्कश्च शारङ्गान् विश्वकर्मकृत् ॥ ६२ ॥

विष्णुर्जग्राह कर्कोश्च अश्विनौ नीलपाटलान् ।
श्यामवर्णान् हयान्पूषा त्वष्टा शोणानर्निन्दितान् ॥ ६३ ॥

मनोभिलषितानश्वानगृह्णन्नरे सुरा ।
विबुधेभ्यः प्रदत्तानामवशिष्टास्तु ये हयाः ।
संप्रदत्ता नरेन्द्राणां सर्वे ते परमेष्ठिना ॥ ६४ ॥

पृथिव्यां प्रविभक्ता ये दिक्षु जानपदेषु च ।
तेषां पुत्रैश्च पौत्रैश्च सर्वा व्याप्ता वसुन्धरा ॥ ६५ ॥

यथा ह्येकरसं वारि खातभूमि विशेषतः ।
नानारसत्वमाप्नोति बहुधा शुभनिन्दितम् ॥ ६६ ॥

एकमेवेह संभूता हयास्तु परमेष्ठिनः ।
तुल्यकारणसंयुक्ता युगपत्तुल्ययोनयः ॥ ६७ ॥

तुल्याभिजनसंस्थानास्तुल्याङ्गा वातरंहसः ।
देशभेदादुत्तमा स्युः मध्यमाश्चाधमास्तथा ॥ ६८ ॥

संभवो वाजिनामेवं कथितस्त्वधुनोच्यते ।
तेषामाश्रयदेशश्च देशनाम्ना कुलं तथा ॥ ६९ ॥

समुद्रमाश्रिताः केचित्तथान्ये सिन्धुमाश्रिताः ।
श्रिता यवनकाम्बोजांस्तथा वानायुजान्परे ।
शकगान्धारदरदान् हूषदान् मन्द्रकैकयान् ॥ ७० ॥

कलिङ्गपुण्ड्रमगधान् मेकलामत्सतैतिलान् ।
सुराष्ट्रान् शूरसेनांश्च काश्मीरारट्टभूमिकान् ॥ ७१ ॥

पाञ्चालककुराम्बष्ठान् तथा यवनवर्तरान् ।
दशार्णान्मध्यदेशांश्च सौवीरनिषधानपि ॥ ७२ ॥

पूर्ववङ्गकलिङ्गांश्च विदर्भान् क्रथकशिकान् ।
शतद्रुं च विपाशां च चन्द्रभागां च(श्च)तापिनीम् ॥ ७३ ॥

सरस्वतीं कौशिकीं च गङ्गामैरावतीं तथा ।
महानदीनामेतासामन्तर्द्वीपाश्रिताः परे ॥ ७४ ॥

कच्छकं हिमवन्तं च मलयं गोरसं गिरिम् ।
गन्धमादकुलीरौ च कैलासमपि चाश्रिताः ॥ ७५ ॥

दिशो जनपदास्तद्वत्पृथिव्यामाश्रिता हयाः ।
यद्यप्यनेके देशाः स्यु वाजिनामाश्रयाः क्षितौ ॥ ७६ ॥

चतुःपञ्चाशदेव स्युः तथाप्यश्वकुला गिरः(?) ।
हया काम्बोजबाह्लीकाः वानायुजकुलोद्भवाः ।
गान्धारकुलसंभूतास्तथारट्टकुलोद्भवाः ॥ ७७ ॥

चांपेया सैन्धवाश्चापि तैतिलाश्चापि वाजिनः ।
कुलजाश्चोपकुलजा मेचका ह्युपमेचकाः ॥ ७८ ॥

त्रैगर्ताश्चार्जुनेयाश्च सार्वत्रेयास्तथैव च ।
यौधेया यावनाश्चैव ये चान्ये ह्रस्वयावनाः ॥ ७९ ॥

तुखाराः कान्दरेयाश्च वार्ष्मनेयास्तथैव च ।
आवर्तोग्सनाश्मीरा हया ये च सकानकाः ॥ ८० ॥

पार्वत्योत्तरमाद्रेया दाक्षिणा[त्या]श्च ये हयाः ।
अन्तर्द्वीपोद्भवा वाहा कैकेयाम्बष्ठसंज्ञकाः ॥ ८१ ॥

वासन्तकाश्च सौवीरा दारदाः सैवकास्तथा ।
क्षुद्रकैरावता वाहा मालवावन्त्यकास्तथा ॥ ८२ ॥

कालिङ्गाः मौकुराश्चैव वानवास्यास्तथैव च ।
तैलि[त्रैलि]ङ्गिकाश्चक्रथना तथा प्रावृतका हयाः ॥ ८३ ॥

सौराष्ट्रकाश्च शाल्वेयाः कौरक्षेत्रास्तथैव च ।
पाञ्चालाः प्रोथजाश्चैव कुकुरा ह्रस्वकुक्कुराः ॥ ८४ ॥

तथा हैमवता ये च ये चोक्ता मगधोद्भवाः ।
चतुःपञ्चाशदश्वानां कुलान्येतानि भावयेत् ।
देशेष्वन्येषु ये जाताः खशादिष्वपि लक्षणैः ॥ ८५ ॥

चतुःपञ्चाशतो मध्ये कुलस्यान्तर्भवन्ति ते ।
संकीर्णे गुणभूयस्त्वान्निर्दिशेच्च कुलोद्भवम् ॥ ८६ ॥

चतुःपञ्चाशतो मध्ये षड्विंशति कुलानि तु ।
आजान्यांजननादाहुराजाने यांस्तदुद्भवान् ॥ ८७ ॥

आजानेयेषु वाहेषु लक्षणं कथ्यते पुरः ।
समुद्यतशिरोग्रीवा ह्रस्वश्रवणकुष्ठिकाः ॥ ८८ ॥

विभक्तोपरिताङ्गाश्च दृढपादाः सुसंहताः ।
वर्मवन्तः सुनेत्राश्च ऋज्वायतमुखास्तथा ॥ ८९ ॥

मृदुवाला दीर्घकेशा ह्रस्वस्निग्धतनूरुहाः ।
भूयिष्ठवर्णसंपन्ना गतिस्वरसमन्विताः ॥ ९० ॥

ह्रस्वपृष्ठखुराश्चैव ह्रस्वमेढ्रखुरास्तथा ।
तेजःसारबलैर्युक्ताः सुशीलाः सुजितेन्द्रियाः ॥ ९१ ॥

क्षुत्पिपासासहाश्चैव बलवन्तो नमालिनः ।
जिताश्रमाः ह्रस्वमुखा न व्यथन्ते प्रहारतः ।
आयुष्मन्तोऽल्परोगाश्च क्षम[मा]वन्तश्च ते हयाः ॥ ९२ ॥

सुमेधसो जितक्रोधाः सत्त्ववन्तो न कर्कशाः ।
वडवामभिद्वेषन्ते भूयिष्ठं लक्षणान्विताः ॥ ९३ ॥

आवध्यं भर्तृवशगा आजानेया भवन्ति च ।
कुलभेदास्समाख्याता वाजिनामधुनोच्यते ॥ ९४ ॥

कुलप्रभेदविज्ञाननिमित्तं वाजिलक्षणम् ।
काम्बोजास्तुरगाः श्रेष्ठाः सर्वदेशोद्भवेषु च ॥ ९५ ॥

महास्रक्का महाप्रोथा महानासाश्च ते हया: ।
महाहनुललाटाश्च शंकु(क)वर्णा महामुखाः ॥ ९६ ॥

महा मुद्गगादास्ते उच्चरोमान्तपार्ष्णयः ।
समकायोदरावृत्ता महाजघनवालिन: ॥ ९७ ॥

मण्डूकाक्षाः स्फुटमुखा. दीर्घग्रीवास्समुच्छ्रिताः ।
दीर्घैर्म्मुजातैश्च भुजैस्संपूर्णसमवक्षसः ॥ ९८ ॥

पीनवृत्तोरुजंघाश्च हयास्ते स्थूलकुण्ठिकाः ।
तनुस्निग्धसुरोमाणो मृदुरोमतनुत्वच. ॥ ९९ ॥

रूपतेजोबलश्रेष्ठा वर्ष्मवन्त सुसंहताः ।
विनीता शौर्यवन्तश्च श्रीमन्तः प्रियदर्शनाः ॥ १०० ॥

श्वेताः शोणाश्च कृष्णाश्च न विवर्णा भवन्ति ते ।
दृष्ट्वा ते नाभिद्वेषन्ते वाडबामश्वमेव च ॥ १०१ ॥

शीलवन्तस्सदाचाराः सत्ववन्तो न कर्कशाः ।
स्वामिनो हितकर्तारो मनोज्ञाः प्रियदर्शनाः ॥१०२

शुभानूकाः समरसा: काम्बोजास्संप्रकीर्त्तिता: ।
तेषामुपकुले जाताः बाह्लिकेया स्तुरङ्गमाः ॥ १०३ ॥

अल्पोदरा दर्शनतो दुर्ज्ञेयास्ते विजानताम् ।
काम्बोजा बाह्लिकेयाश्च तुल्यसंस्थानसंस्थिताः ॥ १०४ ॥

समानवर्णरूपाश्च तुल्यतेजोजवाश्च ते ।
समानि तेषां लिङ्गानि विशेषस्तत्र कथ्यते ॥ १०५ ॥

दीर्घाङ्गा मृदवस्ते च दीर्घपृष्ठत्रिकाश्च ते ।
आयामपरिणाहाभ्यां किञ्चिद्ध्रस्वतराकृतेः ।
सुपृष्ठह्रस्वजघना चियुवृत्ताः सुकुण्ठकाः ॥ १०६ ॥

पृथ्वायतोद्यतग्रीवाः पूर्वकायसमुद्यताः ।
द्विजैः क्रुद्धास्त्वभिकान्ति न दीना भर्तृवत्सलाः(?) ॥ १०७ ॥

महासनाः स्थिराश्शूराः भूयिष्ठं पिङ्गलाश्चते ।
न च त्यजन्ति पतितं संकटेष्वपि सादिनम् ॥ १०८ ॥

एतावदेव विज्ञानं बाह्लिकानां प्रकीर्तितम् ।
वानायुजा नातिह्रस्वा न महान्तस्सुसंस्थिताः ॥ १०९ ॥

सुप्रमाणाः सुकोलाक्षाः पूर्वकायसमुच्छ्रिताः ।
शंकुकर्णा ह्रस्वमुखा वृत्ताङ्गास्तुङ्गनासिकाः ॥ ११० ॥

ह्रस्वमेढ्राण्डकोशाश्च सुनेत्राश्चारुगामिनः ।
खुरैर्गदभिसंस्थानैर्गम्भीरपरिमण्डलैः ॥ १११ ॥

रथे योक्तुं न शक्यन्ते न सहन्ते च यन्त्रणाम् ।
स्थिराः कर्मसु सर्वेषु भारेऽध्वनि च पारगाः ॥ ११२ ॥

हृष्टास्तरस्विनः शीघ्रा धुरिकर्मणि सुक्षमाः ।
ये चाभिजानते कर्म ते भवन्त्युत्तमा हयाः ॥ ११३ ॥

कृष्णानुवर्णा भूयिष्ठं संकराश्च भवन्ति ते ।
सत्वतेजोबलोपेता हया वानायुजाः स्मृताः ।
तेषामुपकुले जाताः गान्धारा वाजिनो मताः ॥ ११४ ॥

गान्धारजानां विज्ञानलक्षणं कीर्त्यतेऽधुना ।
शोणाश्च बहुवर्णाश्च चाम्पेयास्तुरगाः स्मृताः ॥ ११५ ॥

सैन्धवाः स्थिरपादाश्च विस्तीर्णजघरा[ना]स्थिराः ।
दीर्घग्रीवमुखास्ते वै स्थूलाक्षास्तनुकेशराः ॥ ११६ ॥

शंकुकर्णा महाकाया महोच्छ्रायास्तनुत्वचः ।
नतसृक्का महाप्रोथा हयास्ते बडबोघसः ॥ ११७ ॥

लम्बमेहनमुष्कास्ते स्थूलजत्रुमहोजसः ।
रथे व्रजे च कल्याणा हयास्तेजस्विनश्चते ॥ ११८ ॥

शीलवन्तो बलोपेताः सर्वकर्मानुयायिनः ।
सत्त्ववन्तश्च तुरगाः सैन्धवास्समुदाहृताः ॥ ११९ ॥

तेषामुपकुले येऽश्वास्तैत्तिला (मन्यन्तेऽधमाः) [वाजिनो मताः] ।
स्थूलग्रीवाः सुहनवः स्थूलवालधिकेसराः ।
स्थूलमेढ्रफलाः क्षान्ता बलवन्तो जवान्विताः ॥ १२० ॥

सारवन्तस्सुपादाश्च समुच्छ्रितशिरोधराः ।
पृथुवक्षोललाटास्ते विशालजघनेक्षणाः ॥ १२१ ॥

भारेऽध्वनि क्लेशसहाः क्षुत्पिपासासहाश्च ते ।
सत्ववन्तश्च तुरगाः तैत्तिलास्संप्रकीर्तिताः ॥ १२२ ॥

सुसंस्थानाश्चतुर्वर्णा मेचकाः स्थूलवक्षसः ।
शंकुकर्णाः स्पष्टमुखाः तनुसृक्का महोषणाः(?) ॥ १२३ ॥

दीर्घायतमृदुग्रीवा विस्तीर्णजघनास्तथा ।
ह्रस्वकुष्ठिककूर्चास्ते तनुमध्यमितोदराः ॥ १२४ ॥

मध्यमेधानचपना मध्यसारबलान्विताः ।
सत्वतेजोजवैर्मध्या मेचकास्तुरगाः स्मृताः(?) ॥ १२५ ॥

तथोपमेचका ह्रस्वाः स्थूलवालधिकेसराः ।
मृद्वङ्गा दुर्बलशफास्तनुगात्राः सुकुण्ठिकाः ॥ १२६ ॥
उच्चैर्वर्धशिरोग्रीवा दुर्मुखा बहलैः कटैः(?) ।
ह्रस्वोरस्का विरूपाक्षा हयास्स्युरुपमेचकाः ॥ १२७ ॥
कुलजा दीर्घपृष्ठास्स्युर्ह्रस्वमेढ्रफलास्तथा ।
वृत्तग्रीवाः शुभमुखाः तनुमध्योरुकुष्ठिकाः ।
दीर्घवालधिकेशाश्च कुलजास्समुदाहृताः ॥ १२८ ॥
अथोपकुलजा ह्रस्वास्तनुग्रीवोरुकुष्ठिकाः ।
कुलजैस्समलिङ्गास्ते किञ्चिदायतदेहिनः ॥ १२९ ॥
मन्दप्राणाल्पतेजा ये ते चोपकुलजा हयाः ।
त्रैगर्ताश्चान्तरस्थाश्चं बलवन्तो न कर्कशाः ॥ १३० ॥
ह्रस्वग्रीवा महोरस्का रूक्षवालधिकेसराः ।
प्रायशः शशवर्णास्ते दृढपादशफास्तथा ॥ १३१ ॥

शशक्रोडाः शशमुखाः शशवालधिकेसराः ।
नातिक्रूराः क्रोधनाश्च त्रैगर्ता दुःखवाहिनः ॥ १३२ ॥

आयुजेया[आर्जुनेया] महोरस्काः स्थूलायाः[स्याः]स्थूलकेसराः ।
सूचीमुखा ह्रस्वमुखा लम्बमेढ्रफलास्तथा ॥ १३३ ॥

महास्कन्धाः पृथुग्रीवाः कृष्णवर्णानुवर्णिनः । (?)
अतीव जवनाः क्रूराः आर्जुनेयास्तुरङ्गमाः ॥ १३४ ॥

सावित्रेया ह्रस्वपृष्ठाः स्थूलवालधिकेसराः ।
मृद्वङ्गाश्च सुनेत्राश्च पृथुपादा महौजसः ।
दीर्घपृष्ठोरुसत्वास्ते स्थिरमांसाः सुगन्धयः ॥ १३५ ॥

वर्ष्मवन्तश्च शूराश्च सावित्रेयास्तुरङ्गमाः ।
यौधेयाः ह्रस्वकर्णोष्ठाः सारतेजोजवान्विताः ॥ १३६ ॥

वृत्तायतोन्नतग्रीवा वृत्तमध्योरुकुक्षिकाः ।
दीर्घवालधिकेशाश्च सुखुरा नातिपिङ्गलाः ॥ १३७ ॥

यौधेयाश्च भवन्त्यश्वा भारेऽध्वनि च पारगाः ।
विज्ञानं यवनाश्वानां यथा भवति लिख्यते ॥ १३८ ॥

सुललाटाः सुनेत्राङ्गाः ते च स्पष्टायतैर्मुखैः ।
तनुत्वक्सूक्ष्मरोमाणः शंकुकर्णा लघुक्रमाः ॥ १३९ ॥

सुपृष्ठजघनोरस्का वर्ष्मवन्तस्सुमेधसः ।
बहुवर्णानुवर्णाश्च मनोज्ञाः प्रियदर्शनाः ॥ १४० ॥

सारवन्तस्सुगंभीराः सत्वतेजोबलान्विताः ।
सुकुक्षिकखुराश्शीघ्राःसुस्थिराः सर्वकर्मसु ॥ १४१ ॥

यवनाश्वाश्च बोद्धव्या वृत्ताङ्गा दीर्घबाहवः ।
अन्तैर्वर्म्यपि [अथान्येऽपि च] वक्ष्यन्ते यवनाश्वास्तु वामनाः । (?)
स्वभावतो ह्रस्वकायाः सत्ववन्तो बलान्विताः ॥ १४२ ॥

पूर्णाङ्गास्सुविभक्ताङ्गास्तन्वङ्गास्ते सुसंहताः ।
मनोज्ञरूपास्सुसमाः शुभभाराः सुवर्णिनः ॥ १४३ ॥

कर्कशाः क्रीडनपराः ज्ञेया यवनवामनाः ।
तुखारजा वर्ष्मवन्तः तेजोजवबलान्विताः ॥ १४४ ॥

खराश्चैव तुखाराश्च तुल्यरूपायतास्तनौ ।
भारेऽध्वनि क्लेशसहाः शुभानूका मनस्विनः ॥ १४५ ॥

सुविक्रान्ता वृत्तशफास्तुखारा वाजिनः स्मृताः ।
तुखारा इव विज्ञेयाः केशैः सूक्ष्मतरैः स्थिताः ॥ १४६ ॥

जवोपेता अविषमा वृत्ताङ्गा यस्य कुष्ठिकाः ।
वृत्तदन्ता निरुदराः पृथूरस्का लघुक्रमाः ॥ १४७ ॥

श्वेतशाराः शिरोमाणोभिसहेयाः हयाः स्मृताः(?) ।
कान्दरेयास्तु ये वाहास्तेषां लक्षणमुच्यते ॥ १४८ ॥

कायबन्धाः सुसंबन्धाः दृढपादाः सुकुष्ठिकाः ।
स्थूलत्वक्सूक्ष्मरोमाणः स्थूलवालधिकेसराः ।
अकोपनाः सुशीलाश्च कान्दरेयास्तुरङ्गमाः ॥ १४९ ॥

वार्ष्मनेयास्तनुग्रीवा ह्रस्वाङ्गा ह्रस्वकुष्ठिकाः ।
पश्चाधिकायेषु समाः पूर्वकायेषु च स्थिराः ॥ १५० ॥

तनूदरा ह्रस्वपृष्ठाः स्पर्शवन्तस्सुसंहताः ।
शीलवन्तश्च विज्ञेया वार्ष्मनेयास्तुरङ्गमाः ॥ १५१ ॥

विषमेयास्तथावन्त्याः स्थूलगात्रास्सुकुष्ठिकाः ।
गात्रवन्तो निरुदराः सुबद्धांसशिरोधराः ॥ १५२ ॥

शोणाश्च बहुवर्णाश्च वृत्तमध्याः पृथूरसः ।
आवन्त्याः सूक्ष्मरोमाणो महाजवनवस्तयः ॥ १५३ ॥

औरसा बलवन्तोऽश्वा वीर्यवन्तो मनस्विनः ।
महोरस्कशिरोग्रीवाः पृथुजंघोरुकुष्ठिकाः ॥ १५४ ॥

मृदुभृङ्गाङ्गकेशास्ते दृढपादा महोदराः ।
विज्ञेया औरसा एवं श्वेतवर्णानुवर्णिनः ॥ १५५ ॥

काश्मीरका वर्ष्मवन्तः तेजोवन्तश्शुभेन्द्रियाः ।
पृथ्वायतललाटास्ते शुद्धादाश्शुद्धविक्रमाः ।
तद्वच्च शंकुकर्णाश्च सुरोमाणस्तनुत्वचः ॥ १५६ ॥

स्पष्टायतमुखाः शूरास्सुविभक्ताः सुसंहताः ।
दृढाङ्गा बलसंपन्ना दृढपादा मनस्विनः ॥ १५७ ॥

शोणवर्णानुवर्णाश्च हयाः काश्मीरकास्तु ते ।
शाकानकानामश्वानां लक्षणं कथ्यतेऽधुना ॥ १५८ ॥

नदी शाकानका नाम प्रभूतयवसोदका ।
सुरोघाः शुभतीर्था च तत्रोत्पन्नाश्शाकानकाः ॥ १५९ ॥

पूर्वकायेऽप्युदग्रास्ते पश्चार्धेषु समुद्यताः ।
तन्वायतपृथुग्रीवा दीर्घवालधिकेसराः ॥ १६० ॥

उच्चगात्रोरुजघना हयाः शाकानकाः स्मृताः ।
पार्वतेयास्तनुग्रीवा महाजघनवक्षसः ॥ १६१ ॥

प्रस्तब्धपृष्ठगात्रास्ते दीर्घवालधिकेसराः ।
महाजवा बलोपेताः पारगास्सर्वकर्मसु ॥ १६२ ॥

हृष्टाश्च दृढपादाश्च पार्वतेयास्तुरङ्गमाः ।
हया उत्तरमाद्रेया दीर्घवालधिकेसराः ।
पृथुग्रीवा महाकर्णाः सर्वे ते दीर्घगामिनः ॥ १६३ ॥

न च कर्मणि योग्यास्ते न च शीलान्विता हयाः ।(?)
दुराशया दुःखशीलाः प्रायशो मधुपिङ्गलाः ॥ १६४ ॥

हरिद्वर्णानुवर्णाश्च दृढपादखुराश्च ते ।
एवमुत्तरमाद्रेयास्तुरङ्गा लघुचारिताः ॥ १६५ ॥

हया दक्षिणमाद्रेयाः शूराश्च कलहप्रियाः ।
मन्दप्रकृतयःस्थूलाः स्थूलवालधिकेसराः ॥ १६६ ॥

दीर्घग्रीवमुखा दीनास्तनुगात्रखुराश्च ते ।
एवं दक्षिणमाद्रेयास्तामसाख्सकाः स्मृताः ॥ १६७ ॥

मृदुवालचयाल्पाङ्गा बलवन्तस्सुकेशिनः ।
सुसंस्थितास्ते यवना येऽन्तर्द्वीपोद्भवा हयाः ॥ १६८ ॥(?)

कैकेयका वर्ष्मवन्तो महापोथमुखा हयाः ।
दीर्घग्रीवा महोच्छ्राया दीर्घकेसरवालिनः ॥ १६९ ॥

सुबाहुदृढपादास्ते कैकया जवनास्सदा ।
अपरान्तभवा मृष्टा महास्कन्धा महाबलाः ।
वृत्तग्रीवमुखैर्भुग्नैः पाण्डरा विकटाश्च ते ॥ १७० ॥

महोरस्का महाकक्षा लंबश्रवणमेहनाः ।
दीर्घग्रीवमुखास्ते तु महास्कन्धाः सुकुष्ठिकाः ॥ १७१ ॥

वाजिनोऽम्बष्ठका ज्ञेयास्तानेवमभिनिर्दिशेत् ।
वासन्तकाः सुविक्रान्ताः दीर्घग्रीवामुखा हयाः ॥ १७२ ॥

मृगोदरा ह्रस्वपृष्ठा ह्रस्वश्रवणमेहनाः ।
महोरस्काश्च चपला महाजघनवक्षसः ॥ १७३ ॥

एवं वासन्तका ज्ञेयास्तुरङ्गाः शीलकर्कशाः ।
सौवीरका ह्रस्वपृष्ठा दृढगात्राः क्षमान्विताः ॥ १७४ ॥

उदग्रगामिनो दृप्ताः स्थिरा भारे तथाध्वनि ।
समसंपूर्णसर्वाङ्गा हयाः सौवीरकाः स्मृताः ॥ १७५ ॥

दारदा ह्रस्वजघना ह्रस्वपूर्वाल्पमेधसः ।
महोदरशिरस्कन्धा महाकायाः चलक्रमाः ॥ १७६ ॥

सारवन्तो दृढपदा वर्णवन्तो जवान्विताः ।
ह्रस्वाक्षिपृष्ठलाङ्गूला दारदा वाजिनः स्मृताः ।
सैवकाः स्थूलवालाश्च स्थूलरोमत्वचस्तथा ॥ १७७ ॥

विकटा वर्ष्मवन्तश्च महास्थूलमुखा दृढाः ।
प्रबद्धस्कन्धजघना महोच्छ्वासा महाबलाः ॥ १७८ ॥

स्थूलकुक्षिकजंघाश्च सैवकास्तुरगाः स्मृताः ।
क्षुद्रका वर्ष्मवन्तोऽश्वा बलवन्तो जवान्विताः ॥ १७९ ॥

महोदरशिरस्कन्धाः महोरस्का न कर्कशा ।
चतुरश्रास्पुजघनाः स्वायतास्युप्रतिष्ठिताः ॥ १८० ॥

दीर्घश्रवणमेढ्राश्च सुखुराः क्षुद्रकाः स्मृताः ।
मालवा वर्ष्मवन्तोऽश्वा विस्तीर्णजघनाशयाः ॥ १८१ ॥

पूर्वकायोद्धता दृप्ता लोहिताक्षा मनोरमाः ।
लम्बोष्ठा ह्रस्वकर्णास्ते ह्रस्वग्रीवा महोरसः ॥ १८२ ॥

तेजोभृतोऽतिजवना मालवा दीर्घवाहिनः ।
ऐरावता रूक्षवर्णा मन्दमेधा जवाधराः ॥ १८३ ॥

स्थूलरोमास्थिवालास्ते हीनसत्वाल्पतेजसः ।
विवर्णवर्णाः प्रायेण विषमाङ्गा दृढैः शफैः ।
स्थूलपर्वास्थिमांसाश्च हया ऐरावताः स्मृताः ॥ १८४ ॥

आवन्त्यका भारसहा दीर्घवर्णमहाशिराः ।
महाकायाः पृथुग्रीवा महाजघनवक्षसः ॥ १८५ ॥

शबला बहुवर्णाश्च मृद्वङ्गाः प्रायशश्च ते ।
एवमावन्त्यका ज्ञेया सत्वहीना न कर्कशाः ॥ १८६ ॥

कालिङ्गकाः स्थूलपादाः महावर्णा दृढैः खुरैः ।
आयता विनतास्तब्धाः पश्चार्द्धे विषमाश्च ते ॥ १८७ ॥

कुब्जा दण्डायतग्रीवा भग्नास्या लम्बमेहनाः ।
अल्पतेजोजवबला हयाः कालिंगकाः स्मृताः ॥ १८८ ॥

मौकुगाः स्थूलमांसा स्युर्दुर्मेधाः(?) क्रोधनालसाः ।
ह्रस्वपृष्ठाङ्गजघनाः स्थूलकुक्षिकजानवः ॥ १८९ ॥

भीरवोऽल्पबला मन्दा हीनतेजोजवाश्च ते ।
बह्वाशिनो निरुत्साहा मौकुरास्तुरगाःस्मृताः ॥ १९० ॥(?)

ह्रस्वपृष्ठोरुजघनाः पूर्वकायेषु संस्थिताः ।
पश्चार्धविकृता मन्दाः दृढपादाः क्षमान्विताः ।
मध्यप्रमाणाल्पबलाः सत्वतेजोजवाधराः ॥ १९१ ॥

वानवासिकजातानामेतद्भवति लक्षणम् ।
महोरस्का महास्कन्धा पश्चार्धेषु सुसंहताः ॥ १९२ ॥

दृढकुष्ठिकपादाश्च हयास्तैलैघकाः स्मृताः ।(?)
क्रथना दीर्घकर्णाश्च दीर्घोरुजघनाननाः ॥ १९३ ॥

उदग्राः पूर्वकायेषु पश्चार्द्धविकृताश्च ते ।
हीनवर्णाल्पतेजस्काः स्तब्धगात्रा महोदराः ॥ १९४ ॥

स्थूलकुष्ठिकलाङ्गूलाः क्रथनास्ते हयाः स्मृताः ।
अथोपवृत्तका मन्दाः स्थूललाङ्गूलकुष्ठिकाः ॥ १९५ ॥

लम्बकर्णपृथुस्कन्धा ह्रस्वसृक्काण्डमेहनाः ।
महापृष्ठाश्च कुब्जाश्च दण्डशक्तिविषाणिनः ॥ १९६ ॥

पिङ्गलाक्षाश्च भूयिष्ठं हया ह्यौपावृतेषु ते ।
सौराष्ट्राः स्थूलपादाश्च दृढरोमान्तपार्ष्णयः ॥ १९७ ॥

दीर्घविस्तीर्णसवथुङ्गादर्शनीयावुरस्तते ।(?)
पश्चार्धविकृताश्चैव स्थूलजानूरुकुष्ठिकाः ।
एवं सौराष्ट्रका ज्ञेयाः सुपादा नरमेहनाः ॥ १९८ ॥

शाल्वेया वेशरा ज्ञेयाः स्थिराङ्गा ह्रस्वकुष्ठिकाः ।
तन्वायतपृथुग्रीवा दीर्घकर्णा महोरसः ॥ १९९ ॥

पश्चार्धविकृता रूक्षास्तनुवालधिकेसराः ।
वेसरा शल्यजाश्चैव तनुत्वङ्मध्यमेधसः ॥ २०० ॥

कुरुक्षेत्रेषु जाताश्च पश्चार्धगुरुविक्रमाः ।
अत्युग्रा पूर्वकायेषु पश्चाद्भूस्वार्धतेजसः ॥ २०१ ॥(?)

युक्ताः पृष्ठे तथा स्कन्धे निवहन्ति गुरुक्रमाः ।
कुरुक्षेत्रेषु जातानामेतद्भवति लक्षणम् ॥ २०२ ॥

पाञ्चालजा दीर्घमुखाः स्थूलाङ्गाः स्थूलकुष्ठिकाः ।
विनतायतपूर्वास्ते मृदुगात्राल्पतेजसः ॥ २०३ ॥

सुप्रतिष्ठितपादास्ते विषमा दृढगाणयः ।
दुर्गमध्यासितुं शक्ताः पाञ्चालेषु हयाः स्मृताः ॥ २०४ ॥

कायोपचितमांसाश्च सुविभक्तदृढा भृशम् ।
मन्दतेजोजवाश्चैव प्रोथजा वेसराः स्मृताः ।.
ह्रस्वायामपरीणाहाः खादकाश्चाश्च कुक्कुसाः ॥ २०५ ॥

एतावत्खलु विज्ञानं द्वितीये ह्रस्वकुक्कुसे ।
हिमवस्तू[त्यु]त्तरेयास्ते दीर्घाङ्गास्तनुकुक्षिकाः ॥ २०६ ॥

महाकायशिरःपादाः पूर्वकायेषु संस्थिताः ।
पश्चार्धकाये विकृता जवना विषमाग्रतः ॥ २०७ ॥

दृढपादखुराश्चैव तुरगास्ते प्रकीर्तिताः ।
हिमवत्युत्तरेयास्तु विज्ञेयास्सर्वतः समाः ॥ २०८ ॥

मागधाश्च सुरोमाणो दीर्घाङ्गा नतकुक्षिकाः ।
निर्मांसाल्पस्थिरबला निरुत्साहाल्पतेजसः ॥ २०९ ॥

अल्पाहारा न कर्मण्याः कृच्छ्रं जीवन्ति ते भुवि ।
लम्बोष्ठमेढ्रकर्णाश्च तुरगा मागधास्स्मृताः ॥ २१० ॥

चतुःपञ्चाशदश्वानां कुलं लक्षणसंयुतम् ।
कथितं लक्षणैरेतैः तत्तद्देशसमुद्भवम् ।
श्रियस्सुतानामश्वानां चातुर्वर्ण्यं निवेदितम् ॥ २११ ॥

पूर्वं न तल्लक्षणेन विना ज्ञातुं हि शक्यते ।
ब्राह्मणक्षत्रियविशां शूद्राणामपि वाजिनाम् ॥ २१२ ॥

लक्षणं तत्प्रसङ्गाच्च संकराणां च वक्ष्यते ।
रूपोपपन्ना श्रीमन्तो विमताश्चारुशीलिनः ॥ २१३ ॥

भृशं यत्नोपपन्नाश्च स्मृतिवन्तः सुमेधसः ।
गुरूणामपि राज्ञां च यत्नान्निर्देशकारिणः ॥ २१४ ॥

तेजस्विनस्समर्थाश्च शुचयः शुचिसेविनः ।
क्षुधासहा भारसहाः सुकोपाः सुप्रसादिनः ॥ २१५ ॥

गन्धमाल्यप्रिया नित्यं तूर्यघोषप्रियास्तथा ।
पूजिताः संप्रहृष्यन्ति भवन्त्येवाग्रजास्सदा ॥ २१६ ॥

नित्यं प्रमुदिताश्चैव जायन्ते चारुदर्शनाः ।
पानखादनभोज्यानि उच्छिष्टान्यशुचीनि च ॥ २१७ ॥

पुरीषमथ मूत्रं च वर्जयन्तीह ते हयाः ।
मधुलाजघृतापूपपायसाद्यभिलाषिणः ॥ २१८ ॥

अभीरवो भारसहा यशस्यन्तो महास्वनाः ।
हरिश्वेतारुणा गौराः प्रायशो मधुपिङ्गलाः ॥ २१९ ॥

उदग्रगामिनो हृष्टाः सुखिनस्सर्वमैत्रिणः ।
क्षिप्रं सुप्ता विबुध्यन्ते लाजाज्योशीरगन्धयः ॥ २२० ॥

देवगन्धर्वसत्वास्ते कल्याणाभिजना हयाः ।
एवमाचारवन्तश्च विज्ञेया ब्राह्मणा हयाः ॥ २२१ ॥

सर्वमैत्रित्वमात्रं च ज्ञेयं ब्राह्मण्यलक्षणम् ।
इति ब्रूमो वय तच्च ब्राह्मणेष्वेव संभवि ॥ २२२ ॥

क्षत्रिया दुःखशीलाश्च कोपना ब्रह्मवर्चसः ।
तीक्ष्णप्रकृतयः शूरा महागंभीरनिस्वनाः ।
मानवन्तो महासत्वाः शुद्धसत्वा जवक्रियाः ॥ २२३ ॥

वर्षादिजलसंह्रादे ताडने पतने भये ।
कर्कशोष्णस्पर्शनेषु न विषीदन्ति ते हयाः ॥ २२४ ॥

कल्याणाभिजनोपेताः कल्याणाः प्रियदर्शनाः ।
रथनेमिनिनादेषु शंखतालस्वनेषु च ॥ २२५ ॥

बृंहितेष्वथ नागानां घण्टास्वाडम्बरेषु च ।
प्रत्यश्वानां हेषणेन वेणुदुन्दुभिनिस्वनैः ।
ध्वजच्छत्रपताकासु महाव्यूहेषु गर्विताः ॥ २२६ ॥

विकिरन्ति हि ते वालान् हेषन्ते मुदितेन्द्रियाः ।
खुराग्रैः दारयन्तश्च ते जिगीषन्ति मेदिनीम् ॥ २२७ ॥

स्वेदमूत्रपुरीषाणि चोत्सृजन्ति मुहुर्मुहुः ।
हस्त्यश्वरथपादातं गाहन्ते तेऽभीरवो हयाः ॥ २२८ ॥

अन्येषां पृष्ठतोऽश्वानां क्षमन्ते गमनं न ते ।
न व्यथन्ते प्रहारैश्च शत्रुं दृष्ट्वा न बिभ्यति ॥ २२९ ॥

क्षिप्रकाराश्च शूराश्च युद्धशीघ्रपराक्रमाः ।
मणिमल्लिकपिङ्गाक्षा न विवर्णाः सुवर्णिनः ॥ २३० ॥

मेधा [वि] नोऽथ जवना दक्षा दीनासु तृप्तिगाः ।
सर्वकर्मसहा नित्यं न क्लिष्टा न प्रमादिनः ॥ २३१ ॥

पुण्यपुष्पफलाढ्यानां सगन्धा जागरिष्णवः ।
देवगन्धर्वसत्वास्ते विज्ञेयाः क्षत्रिया हयाः ॥ २३२ ॥

नानाशस्त्रप्रहरणाननादृत्य मुहुर्मुहुः ।
युद्ध एवोत्सुका एते क्षत्रिया इति नो मतम् ॥ २३३ ॥

वैश्याः पालप्रियाः शान्ता गुरुमेधाः स्थिरालसाः ।
न कुप्यन्ति न हृष्यन्ति स्थिरात्मानो जितेन्द्रियाः ।
विनीताचारवर्ता[न्त]श्च जितक्रोधा न मानिनः ॥ २३४ ॥

मृदवः सौम्यशीलास्ते वेदनोष्णक्षुधासहाः ।
भाराधानेऽध्वगमने स्थिरा मध्यजवाश्च ते ॥ २३५ ॥

मध्यसारबलाश्चैव हरिपिङ्गेक्षणास्तथा ।
क्रौञ्चपत्राः शिताश्शोणाः पल्लवारुणरोमकाः ॥ २३६ ॥

तालतालीसमाभाश्च प्रायशः पाटलाश्च ते ।
हरितालसगन्धा ये तथोष्ट्रक्षीरगन्धयः ॥ २३७ ॥

सुप्तप्रमादिनः शान्ताः मानुषं सत्वमाश्रिताः ।
एवंविधसमाचारा वैश्या ज्ञेयाः समन्विताः ॥ २३८ ॥

न ब्राह्मणसमा मैत्री शूद्रवन्न च हिंस्रता ।
न युद्धोत्सुकता येषां क्षत्रवत्ते तुरङ्गमाः ।
भवन्ति वैश्यजातीया इति ब्रूमो वयं पुनः ॥ २३९ ॥

अनिष्टशीलाः स्युश्शूद्राः पादैर्भूमिं लिखन्ति च ।
उच्छिष्टं तेऽभिमन्यन्ते परेषां पानभोजनम् ॥ २४० ॥

शुष्कामि(ष्ट)[ष]मपि क्लिष्टं सेवन्ते तेऽसकृन्मुदा ।
पुरीषमूत्रं जिघ्रन्ति भक्षयन्ति जुगुप्सितम् ॥ २४१ ॥

असेव्यमपि सेवन्ते निघ्नन्ति परिचारकान् ।
आत्मानं कुड्यकाष्ठानि दन्तैस्तेऽपार्थयन्ति च ॥ २४२ ॥

वेत्रदण्डकशाघातैः नाभिजानन्त्यमर्षिणः ।
शूरं चैव जुगुप्सन्ते न ग(ति)[तौ] शुचयश्च ते ॥ २४३ ॥(?)

चतुष्पथेषु द्वारेषु पुरीषं चोत्सृजन्ति ते ।
धूमभ्रमरवर्णाभा न प्रशान्ता दुरासदाः ॥ २४४ ॥

ध्वाक्षार्नी उषगन्धास्ते ऋक्षाभिन्नस्थिरास्तथा ।(?)
सुप्तप्रमादिनःसर्वे दक्षाः पैशाचसात्विकाः ।
एवमाचारसंस्थानाः शूद्रा ज्ञेयास्तुरङ्गमाः ॥ २४५ ॥

अतिहिंस्रा अप्रशान्ता येऽश्वा नित्यममर्षिणः ।
ते शूद्रा इति विज्ञेया इति ब्रूमो वयं पुनः ॥ २४६ ॥

ब्राह्मण्यां ब्राह्मणो वाजी सवर्णाज्जायते तथा ।
क्षत्रियायां क्षत्रियः स्याद्वैश्यायां वैश्यजातिमान् ॥ २४७ ॥

शूद्र्यां शूद्र प्रजायेत वदामः संकरानथ ।
मूर्धाभिषिक्तो विप्रात् स्यात्क्षत्रियायां हयस्त्रियाम् ॥ २४८ ॥

वैश्यायां ब्राह्मणाज्जातमम्बष्ठमिति निर्दिशेत् ।
शूद्रायां ब्राह्मणाज्जातं निषादमिति निर्दिशेत् ॥ २४९ ॥

वैश्यायां क्षत्रियाज्जातः माहिष्यः स्यात्तुरङ्गमः ।
क्षत्रियेण तु शूद्रायामुग्रमुत्पन्नमादिशेत् ॥ २५० ॥

वैश्यन शूद्र्यां संजातं करणं वाजिनं दिशेत् ।
अनुलोमा अमी उक्ता वदामः प्रतिलोमजान् ॥ २५१ ॥

अवरासूत्तमाज्जातमनुलोमं प्रकीर्तयेत् ।
उत्तमास्ववराज्जातः प्रतिलोम इति स्मृतः ॥ २५२ ॥

क्षत्रियेण च ब्राह्मण्यां जाताः सूता इति स्मृताः ।
ब्राह्मण्यां तु यदा वैश्यो जनयेन्मागधस्ततः ॥ २५३ ॥

ब्राह्मण्यां च यदा शूद्रो शाव[ऽश्वाया]मुत्पादयेत्तु यम् ।
सगणा इति विज्ञेयाः पापाभिजनगोचराः ॥ २५४ ॥

नाभिजानन्ति कर्माणि प्रमत्ताः खरनिस्वनाः ।
रूक्षभिन्नस्वराः क्रूराः अप्रशस्ता दुरासदाः ॥ २५६ ॥

उपदिग्धा अप्रशस्तैः व्यञ्जनाचारलक्षणैः ।
पुष्पैः पुण्ड्रैश्च विविधैर्निन्दितैः परिमण्डिताः ॥ २५७ ॥

भर्तृबन्धकयोक्तृणां प्रमादेषु प्रहारिणः ।
पुरीषमूत्रमुत्कृष्टं खादन्ति न जुगुप्सिताः ॥ २५८ ॥

भिन्नागारेष्वशुचिषु शून्यागारेषु मोदिनः ।
सृगालवृकवर्णाश्च धूम्रवर्णा विवर्णिनः ॥ २५९ ॥

घोरस्वराः पूतिगन्धाः प्रियमांसाः सुरादनाः ।
पिशाचरक्षोभिजनाश्चाण्डालाश्च दुरासदाः ॥ २६० ॥

चाण्डाला वाजिनोऽश्वायामुत्पन्नं वाजिनं दिशेत् ।
श्वपाकं च तथायामं स्वम्बष्ठं च [चैव] शूद्रतः ।(?)
उत्पन्नं वाजिनं विद्यात्तं वैदेहिकसंज्ञिकम् ॥ २६१ ॥

शूद्रेण च निषादायां जायते कुक्कुरो हयः ।
कुक्कुरस्तु भवेदश्व शूद्रायां यो निषादत ।
श्वपाकाद्याश्च चत्वारश्चण्डालाः संप्रकीर्त्तिताः ॥ २६२ ॥

बलवान् स्निग्धवर्णश्च सौम्यरूपो गुणान्वितः ।
ब्रह्मचारी क्षपाशायी नालसो नातिमत्सरी ॥ २६३ ॥

उत्थानशीलो निद्रां च सेवते चोत्थितस्सदा ।
स्वामिभक्तश्च भवति शिक्षां शीघ्रं प्रपद्यते ॥ २६४ ॥

न च त्यजति तां प्राप्य शौर्यं सर्वत्र सेवते ।
युद्धेऽध्वनि तथा शौचे न च पीडां स गच्छति ॥ २६५ ॥
व्याधिना पीडितोऽत्यर्थं न म्लानिमधिगच्छति ।
पुष्टिं व्रजति शीघ्रं च येन केनचिदाशितः ॥ २६६ ॥
धृतिं बध्नाति सर्वत्र भद्रजात्यास्तुरङ्गमाः ।
सत्वं रजस्तमश्चेति सर्वं स्यात्त्रिगुणात्मकम् ।
सत्वप्रधाना भद्राः स्युरितिब्रूमो वयं पुनः ॥ २६७ ॥
ह्रीमन्तस्सुखबोधाश्च सात्विका दीर्घदर्शिनः ।
आयुष्मन्तश्च विज्ञेयाः क्षमावन्तश्च ते हयाः ॥ २६८ ॥
सात्विका राजवाहाश्च यज्ञाश्वाश्च सुपूजिता ।
विबुधाश्वाश्च विज्ञेया युवराजस्य वै तथा ॥ २६९ ॥
सान्नाह्याश्वाश्च [विज्ञेया] राज्ञः सेनापतेरपि ।
पुरोधोऽमात्ययोश्चापि वाहनार्थेऽतिपूजिता. ॥ २७० ॥
चतुरङ्गबलं दृष्ट्वा परेषामतिहर्षिताः ।
आरोहमवरोहं च सहन्ते तुरगोत्तमा. ॥ २७१ ॥
न चावसीदन्ति तथा सात्विकास्सर्वकर्मसु ।
माङ्गल्यलक्षणैर्युक्त किञ्चिदुच्चैर्विगर्हित. ॥ २७२ ॥
शीघ्रं गृह्णाति शिक्षां च क्षिप्र च प्रतिमुञ्चति ।
रात्रौ स्वपिति च तथा तूपविष्टस्तुरङ्गमः ।
(च) तुरङ्गमाणां क्रोधाच्च कामो चेर्ष्यालुरेव च ॥ २७३ ॥
आदौ शूद्रस्तत.पश्चाद्भीरुत्वमुपगच्छति ।
स्तोकेनापि प्रहारेण चिरं वोपयते हयः ॥ २७४ ॥(?)
एवंविधस्तु विज्ञेयो मन्दजात्यस्तुरङ्गमः ।
पूर्वाचार्यानुसारेण प्रोक्तं मन्दस्य लक्षणम् ॥ २७५ ॥
रजःप्रधानो मन्द.स्यादिति ब्रूमो वयं पुनः ।
दु खभाजो मत्सरिणः सुतीक्ष्णाः साहसप्रियाः ।
ह्रस्वायुषो रोषणाश्च विज्ञेया राजसा हयाः ॥ २७६ ॥

रूक्षो भीरुस्तथा त्रासी निद्रा[लु]रलसः शठः ।
प्रसार्य गात्रं सकलं दिवा वा यदि वा निशि ॥ २७७ ॥

सततं भजते निद्रां बाधते च तुरङ्गमान् ।
चिरेण शिक्षां गृह्णाति क्षिप्रं च प्रतिमुञ्चति ॥ २७८ ॥

न च वेत्ति प्रहाराणि ग्लानिं शीघ्रं च गच्छति ।
न च पुष्टिमवाप्नोति मृगजात्यस्तुरङ्गमः ॥ २७९ ॥

पूर्वाचार्यानुसारेण मृगस्यैतत्तु लक्षणम् ।
मृगस्तमःप्रधानः स्यादिति ब्रूमो वयं पुनः ॥ २८० ॥

तत्त्रि[न्द्रि]णः स्वप्नशीलाश्च मृगा हीनास्तथैव च ।
दुर्मेधसोऽलसाश्चै[व] विज्ञेयास्त[ता]मसा हयाः ॥ २८१ ॥

मिश्रैर्गुणैः स्यान्मिश्रश्च तथैव च तुरङ्गमः ।
भद्रः श्रेष्ठो हयो ज्ञेयो मन्दो मध्यम उच्यते ।
अधमस्तु मृगो ज्ञेयो जातिरेषां च वाजिनाम् ॥ २८२ ॥

भद्रादयश्चतस्रोऽपि जातयोऽन्तर्भवन्ति हि ।
चतुर्विधासु पूर्वोक्तब्राह्मणादिषु जातिषु ॥ २८३ ॥

अथोच्यते तुरङ्गाणां यत्सत्त्वमिति भण्यते ।
त्रिविधं सत्वमिच्छन्ति शुद्धं राजसतामसम् ॥ २८४ ॥

शुद्धं सप्तविधं ज्ञेयं राजसं षड्विधं तथा ।
तामसं त्रिविधं ज्ञेयममीषां रूपमुच्यते ॥ २८५ ॥

ब्राह्ममार्षं च माहेन्द्रं याम्यं कौबेरवारुणम् ।
गान्धर्वं चैव सप्तैव शुद्धभेदाः प्रकीर्तिताः ॥ २८६ ॥

आसुरं राक्षसं चैव पैशाचं नागमेव च ।
पैत्रं तथा शाकुनं च राजसं षड्विधं विदुः ॥ २८७ ॥

पाशकं चैव मात्स्यं च वानस्पत्यं तथैव च ।
तामसं त्रिविधं प्रोक्तमेषां लक्षणमुच्यते ॥ २८७ ॥

सर्वभागस्थितात्मानं सत्यसन्धं शुचिं तथा ।
ज्ञानविज्ञानसंपन्नं स्मृतिमन्त्रिप्रकोपनम् ॥ २८८ ॥

कामात् क्रोधादपेतं च लोभान्मोहात्तथैव च ।
एभिश्च लक्षणैर्युक्तं ब्राह्मं सत्वं विनिर्दिशेत् ।
विज्ञानं ग्रहणं चैव प्रतिभा धारणा तथा ॥ २८९ ॥

मनसश्चोपशान्तिश्च यस्मिन्नेतानि नित्यशः ।
मन्द्रो मनोऽनुरागश्च सत्वमार्षं विनिर्दिशेत् ॥ २९० ॥

ऐश्वर्यवन्तं धन्यं च तथैवानिष्टकारणम् ।
तैजसं प्राप्तिकुशलमैन्द्रसत्वं विनिर्दिशेत् ॥ २९१ ॥

द्वेषाद्रागादपेतश्च भयान्मोहात्तथैव च ।
स्मृतिमान्प्राप्यकारी च याम्यसत्वस्तथा हयः ॥ २९२ ॥

व्यक्तकोपप्रसादं च स्मृतिमन्तं शुचिं तथा ।
स्थाने माने च भोगे च संपन्नं कामदं सदा ॥ २९३ ॥

उत्थानशीलं कौबेरं तथा सुखविहारिणम् ।
ऐश्वर्यभागिनं शूरमशुचिद्वेषिणं शुचिम् ॥ २९४ ॥

अम्भोविहाररुचिकमक्षुद्रं प्रियदर्शनम् ।
स्थानकोपप्रसादज्ञमभीष्टं वारुणं विदुः ॥ २९५ ॥

गान्धर्वं सप्तमं चैव प्रियगन्धानुलेपनम् ।
पुण्यशब्दाभिरागं च विहारप्रियमेव च ।
पानमाल्यप्रियं नित्यमनसूयं च तं विदुः ॥ २९६ ॥

ऐश्वर्यवन्तमद्वेषं चण्डमौत्पथिकं तथा ।
शूरं तीक्ष्णं प्रहर्तारममर्षात्परुषाशयम् ॥ २९७ ॥

निरतं चात्मपूजायां निरनुक्रोशमेव च ।
साभ्यसूयं तथा रौद्रमासुरं तु विनिर्दिशेत् ॥ २९८ ॥

व्यक्तक्रोधान्वितं चैव तथा छिद्रप्रहारिणम् ।
अमर्षिणं प्रियस्वप्नमावासप्रियमेव च ॥ २९९ ॥

तथा महास्वनं चैव राक्षसं सत्वमेव च ।
भीरुं शुचिद्वेषिणं च रूक्षमप्रियदर्शनम् ॥ ३०० ॥
महास्वनं भेदरुचिं क्रूरं भिन्नस्वनं तथा ।
शून्यागारप्रमुदितं पैशाचमशुचिं विदुः ॥ ३०१ ॥
अक्रुद्धभीरुशूरं च तीक्ष्णमायासशालिनम् ।
प्रियपानविहारं च नागसत्वं विनिर्दिशेत् ॥ ३०२ ॥
दुःखाचारप्रचारं च दुःशीलं भोजनप्रियम् ।
कर्मण्यपि च वाहानां पैत्र्यं सत्वं विनिर्दिशेत् ॥ ३०३ ॥
अस्थानक्रोधसत्वं च अजस्राहारमैथुनम् ।
अनवस्थितचित्तं च सामर्षं शाकुनं विदुः ॥ ३०४ ॥
अजागरिष्णुं भीरुं च स्वप्नशीलममेधसम् ।
आहारमैथुने रक्तं पाशवन्तं विनिर्दिशेत् ॥ ३०५ ॥
आहारलुब्धं मुग्धं च भीरुमप्यनवस्थितम् ।
मात्स्यमेवं विजानीयाद्वारुणं च जलप्रियम् ॥ ३०६ ॥
सर्ववृद्धाङ्गहीनं च ध्यानशीलं प्रियालसम् ।
आहारे केवलं युक्तं वानस्पत्यं च तं विदुः ॥ ३०७ ॥
प्रदेशान्वाजिदेहस्थान् यो न जानाति तत्वतः ।
लक्षणं न स जानाति नापि वेत्ति चिकित्सितम् ॥ ३०८ ॥
अतः प्रदेशान्वक्ष्यामो वाजिदेहेषु संस्थितान् ।
अतिप्रसिद्धं वदनं जानीयादग्रतस्ततः ॥ ३०९ ॥
कण्ठनाडीनिबद्धान्तु जिह्वां विद्याद्रसायिनीम् ।
अनुजिह्वोपरि भवेत्सुनापीठस्ततस्त्वधः ।
हनोर्जाताश्च हानव्या भक्षार्थदशनाःस्मृताः ॥ ३१० ॥
ते चतुर्विंशदंष्ट्राश्च चतस्रस्त्वधरोत्तराः ।
हान्य[न]व्यानामनुभवाद् द्वादश द्वादशाग्रतः ॥ ३११ ॥
ज्ञेया व्यञ्जनिनस्त्वेवं चत्वारिंशद्भवन्ति ते ।
प्रपाणमुत्तरोष्ठस्य विद्यादुपरि वाजिनः ॥ ३१२ ॥

प्रपाणादुपरिष्टाच्च प्रोथं समुपलक्षयेत् ।
उभयो. पार्श्वयोः प्रोथाद्विद्यान्नासापुटौ तथा ॥ ३१३ ॥

प्रोथाक्ष्णोरन्तरे या च घोणां तामुपलक्षयेत् ।
घोणापार्श्वगतेऽश्वस्य गण्डपार्श्वे प्रकीर्त्तिते ॥ ३१४ ॥

तस्योपरिष्टाद्दन्तानामुत्तरा वाजिनां भवेत् ।
दशनाच्छादनौ चोभौ विद्यादोष्ठौ ततःपरम् ॥ ३१५ ॥

ओष्ठसन्धौ निबद्धे च पार्श्वयोः सृक्कणी तथा ।
अधस्ताच्चाधरोष्ठस्य चिबुकं परिकीर्त्तितम् ॥ ३१६ ॥

घोणा घाटाग्रविवरावश्रुपातौ विभावयेत् ।
अश्रुपातोपरि भवेन्नेत्रयोः समवस्थितिः ।
अक्ष्णोः प्रसादनान्याहुः वर्त्मान्यपि च वाजिनाम् ॥ ३१७ ॥

वर्त्मसन्धे ततो विद्याच्छुक्लभागौ च वाजिनाम् ।
शुक्लमण्डलयोर्मध्ये विज्ञेयं दृष्टिमण्डलम् ॥ ३१८ ॥

वर्त्मोपरि ततो विद्यादक्षिकूटो हयस्य च ।
अक्षिकूटोपरिष्टाच्च भ्रुवौ विद्याद्विचक्षणः ॥ ३१९ ॥

अक्ष्णोरभ्यन्तरगते कनीने प्रतिभावयेत ।
अपाङ्गावपि चाश्वस्य घाटां च तदनन्तरम् ॥ ३२० ॥

स्तुवभ्रुवोरन्तरं च ललाटं परिकीर्त्तितम (?) ।
ललाटोपरिचास्यस्त द्वन्द्वं समुपलक्षयेत (?) ॥ ३२१ ॥

ततो विद्याच्छिरः कर्णौ शिरः पार्श्वगणैस्तथा(?) ।
कर्णशंखान्तरस्थौ तु कटौ विद्याद्विचक्षणः ॥ ३२२ ॥

कटापाङ्गसमीपस्थौ शंखौ संपरिकीर्त्तितौ ।
चिबुकादुपरिष्टाच्च गण्डौ संपरिकीर्त्तितौ ॥ ३२३ ॥

गण्डयोः पार्श्वयोर्ज्ञेये हन्यचक्रे इति स्थितिः(?) ।
हन्योश्च गलनाडीनां निगालः सन्धिरुच्यते ।
कर्णयोः पृष्ठतश्चापि बिन्दुः[न्दुं] समुपलक्षयेत् ॥ ३२४ ॥

तत्रस्थे चापि वाहस्य विज्ञेये विदुमर्मणी ।
पार्श्वयोः कण्ठनाड्याश्च मन्ये समुपलक्षयेत् (?)॥ ३२५ ॥

शिरोंऽसयोश्च यन्मध्य ग्रीवा सा परिकोर्त्तिता ।
ग्रीवा [या]ह्युपरि स्कन्धस्तुरगस्य प्रकीर्तितः ॥ ३२६ ॥

स्कन्धस्योपरि निर्देश्यं केसरं शास्त्रकोविदैः ।
पार्श्वयोश्चापि केशानां केशान्तं प्रविभावयेत् ॥ ३२७ ॥

जतुकस्य पुरस्ताच्च वहमस्य विनिर्दिशेत् ।
काकसावहयोर्मध्ये जतुकं परिकीर्त्तितम् ॥ ३२८ ॥

जतुकः ककुदोर्मध्ये काकसां तु विनिर्दिशेत् ।
काकसानयोर्मध्ये ककुदं परिकोर्तयेत् ॥ ३२९ ॥

आसनं च विजानीयात्ककुदः समनन्तरम् ।
अतःपरं पृष्ठवंशं पृष्ठं चैवोपलक्षयेत् ॥ ३३० ॥

ककुदासनसंधौ च विद्यादंशं हयस्य तु ।
अंशमूलाश्रिते चोभे तुरगस्योपलक्षयेत् ।
निगालकण्ठयोर्मध्ये गलं विद्याद्विचक्षणः ॥ ३३१ ॥

गलवक्षोऽन्तरे चापि कण्ठं समुपलक्षयेत् ।
उभयोरन्तरं तत्तु बाह्वोरुपरि यद्भवेत् ॥ ३३२ ॥

कण्ठादधस्तनश्चापि वक्षोऽश्वस्य विनिर्दिशेत् ।
हृद्वक्षोत्तरमश्वस्य क्रोडं विद्याद्विचक्षणः ॥ ३३३ ॥

क्रोडादधस्ततश्चापि बाहू समुपलक्षयेत् ।
बाह्वोरधस्ततश्चापि जानुनी संप्रकीर्त्तिते ॥ ३३४ ॥

जान्वोरभ्यन्तरगते कितो चाप्युपलक्षयेत् ।
जान्वोरधस्ताज्जंघां च पुरस्तादुपलक्षयेत् ॥ ३३५ ॥

पृष्ठतश्च कलेऽश्वस्य कूर्चादुपरि निर्दिशेत् ।
अधस्तात्कलयेश्चापि पलिहस्तौ प्रकीर्त्तितौ ॥ ३३६ ॥

पलिहस्तसमीपस्थौ कूर्चौ समुपलक्षयेत् ।
अधस्तात्कूर्चयोश्चापि कुष्ठिके परिकीर्त्तिते ॥ ३३७ ॥

क्षुरसन्धिस्ततोऽधस्तात्पार्ष्णि शीर्षे च वाजिनाम् ।
ततः खुरान्नखाश्चापि तलांश्चाप्युपलक्षयेत् ।
मण्डूक्यश्चापि वाहस्य तलमध्यगता विदुः ॥ ३३८ ॥

बाह्वोश्च पृष्ठतोऽश्वस्य कक्षौ विद्याद्विचक्षणः ।
क्रोडस्यानन्तरं चैव हृदयं परिकीर्त्तितम् ॥ ३३९ ॥

हृन्नाभ्योरन्तरे चापि जठरं वाजिनां मतम् ।
ततोऽपि जघनासेहं पुच्छादुपरि निर्दिशेत् ॥ ३४० ॥

कुक्षो[क्षे]रुपरिचाश्वस्य तथा विद्यात्ककुदरं ।
पश्चाद्वंशस्तुरङ्गस्य सन्धिश्चोपरि गात्रयोः ॥ ३४१ ॥

त्रयाणां सन्निपाताच्च त्रिकमित्यभिधीयते ।
त्रिकादनन्तरं चापि जघनं परिकीर्त्तितम् ॥ ३४२ ॥

ततोऽपि जघनारोहं पुच्छादुपरिनिर्दिशेत् ।
तथैव रोहिणीं सन्धि त्रिकादुभयतो विदुः ।
तयोश्चाधस्तताऽश्वस्य पाण्डुसन्ध्याप्रकार्तितौ(?) ॥ ३४३ ॥

जघनस्य निरोहान्ते पुच्छं विद्यादधस्ततः ।
ततश्च वर्तिका ज्ञेया वालाश्च तुरगे स्मृताः ॥ ३४४ ॥

पुच्छमूलप्रतिच्छन्नं गुदं विद्याद्विचक्षणः ।
गुदमासलयोश्चाधः स्फिक्कपर्णौ परिकीर्त्तितौ ॥ ३४५ ॥

गुदादधस्तत्सक्थ्योश्च विवरं सावनं विदुः ।
कटिसन्धि ततो विद्यात्कुटिं च तदनन्तरम् ॥ ३४६ ॥

सक्थ्यन्तरस्थौ मुष्कौ तु तुरगस्य विनिर्दिशेत् ।
मुष्कनाभ्यन्तरेऽश्वस्य शिश्नं विद्याद्विचक्षणः ॥ ३४७ ॥

मूत्रकोशस्ततोऽश्वस्य शिश्नमुष्कान्तरे ततः ।
विण्मूत्रकोशयोर्मध्ये नाभिं समुपलक्षयेत् ॥ ३४८ ॥

कुक्षिनाभ्यन्तरस्थौ च उपरन्ध्रे प्रकीर्तितौ ।
रन्ध्रौ चाप्युपरन्ध्रौ च कुक्षेरभ्यन्तरस्थितौ ।
पाण्डुमूलनिबद्धे च सक्थनी परिकीर्तिते ॥ ३४९ ॥

स [कृथनो] श्चैवोभयोस्सन्धि विद्यादुपरि वाजिनः ।
अधस्तादुभयोरूरू तुरगस्याभिनिर्दिशेत् ॥ ३५० ॥

तयोरधस्तनेऽश्वस्य विज्ञेये वक्रसक्थिनी ।
वक्रसक्थ्योरधस्तात्तु स्थूरा सन्धिप्रकीर्त्तितौ(?) ॥ ३५१ ॥

ततःस्थूरे च विज्ञेयं मन्दिरं च तदाश्रितम् ।
पूर्वगात्रानुमानेन पृष्ठतोऽप्युपलक्षयेत् ॥ ३५२ ॥

अग्रजंघाद्वयं चैव वक्षो ग्रीवा शिरो मुखम् ।
पूर्वकायस्समुद्दिष्टः पृष्ठदेशस्तु मध्यमः ॥ ३५३ ॥

आकटेः पश्चिमो भागः खुरान्तश्चापरः स्मृतः ।
विशेषतः पूर्वमुक्ता अन्या अवयवा अपि ॥ ३५४ ॥

अश्वायामाधिकं यच्च कथ्यतेऽवयवान्तरम् ।
गुदादधस्ततोऽश्वाया योनिं समुपलक्षयेत् ॥ ३५५ ॥

नाभ्या अधस्ताच्च तथा मधः समुपलक्षयेत् ।
मधोमध्ये विजानीयात्स्तनौ चापि विचक्षणः ॥ ३५६ ॥

उक्ताः प्रदेशा अश्वस्य तेषां मानमथोच्यते ।
लक्षणं शक्यते ज्ञातुं न मानज्ञानतो विना ॥ ३५७ ॥

न केवलमिहाङ्गानामङ्गानामपि लक्ष्यते ।
मानं तु त्रिविधं ज्ञेयं श्रेष्ठमध्यकनीयसम् ॥ ३५८ ॥

श्रेष्ठाश्वाद्दशभागोनं प्रमाणं स्यात्तु मध्यमे ।
मध्यमाद्दशभागोनं प्रमाणं स्यात्कनीयसः ।
केचित्तु वाजिशास्त्रज्ञा मानमेवं प्रचक्षते ॥ ३५९ ॥

आयामोत्सेधविष्कंभाः परिणाहश्चतुर्थकः ।
एते मानस्य भेदाः स्युः एषां रूपं च कथ्यते ॥ ३६० ॥

प्रोथादिवर्तिकाप्रान्त आयामः स्यादिति स्थितिः ।
उत्सेधस्तु तलादूर्ध्वमाककुद्देशकादिति ॥ ३६१ ॥

पृष्ठमध्ये परीणाहः स्तुरगस्य विधीयते ।
विष्कम्भश्चापि तत्रैव तुरगस्य प्रकीर्तितः ॥ ३६२ ॥

तत्रोत्तमाश्व[स्या]यामः शतं षष्टिश्च कीर्तितः ।
अङ्गुलीनामशीतिश्च परिणाहः प्रकीर्तितः ॥ ३६३ ॥

उत्सेधश्च तथाशीतिरङ्गुलीनां प्रकीर्तितः ।
परिणाहत्रिभागश्च विष्कम्भ परिकीर्तितः ॥ ३६४ ॥

अङ्गिरो मानवो वंशदङ्गानां मानमुच्यते ।
द्वात्रिंशदङ्गुलं वक्त्रं तुरगाणां प्रकीर्तितम् ॥ ३६५ ॥

अष्टाविंशत्यङ्गुलं तु मुख केचित्प्रचक्षते ।
द्वात्रिंशदङ्गुला जिह्वा तद्वत्ताल्वपि कीर्तितम् ॥ ३६६ ॥

केचित्तु दङ्गुलं तालु विंशत्यङ्गुलमायतम्(?) ।
प्रवदन्ति तुरङ्गाणां सुना तु त्र्यङ्गुला मता ॥ ३६७ ॥

हानव्यास्त्वङ्गुलसमा द्विजा ह्यध्वर्धमङ्गुलम् ।
प्रमाणं त्र्यङ्गुलं प्रोक्तं कैश्चिद् द्व्यङ्गुलमिष्यते ॥ ३६८ ॥

प्रायोऽङ्गुलचतुष्कः स्यात्केषांचित्त्र्यगुल मतम् ।
स्यादङ्गुलं समं चैव प्रमाण प्रोथकान्तरम् ॥ ३६९ ॥

नासापुटौ च विज्ञेयौ सार्धाङ्गुलकविस्तृतौ ।
[षा]डशांगुलका घाणा स्यात् षडंगुलिकोत्तरा ॥ ३७० ॥

ओष्ठौ तु द्व्यङ्गुलौ कैश्चिदुत्तरश्चतुरङ्गुलः ।
द्व्यर्धाङ्गुले सृक्कणी च केषांचिच्चतुरंगुले ॥ ३७१ ॥

द्व्यङ्गुलं चिबुकं चाश्रुपातौ च चतुरङ्गुलौ ।
पञ्चांगुलायते नेत्रे वर्त्मनी चापि वाजिनाम् ॥ ३७२ ॥

केषांचित्त्र्यंगुले नेत्रे वर्त्मनी त्र्यंगुलं(ले) तथा ।
पञ्चांगुलो वर्त्मसन्धिः द्व्यंगुलश्चाक्षिगोलकः ॥ ३७३ ॥

अर्धांगुला भवेत् दृष्टिरक्षिकूटौ भ्रुवौ तथा ।
पञ्चांगुलौ भ्रुवोर्मानं केषांचिच्चतुरंगुलम् ।
तुरङ्गाणां भवेतां तु यवमात्रे कनीयके ॥ ३७४ ॥

अपांगो यवमात्रस्याद्घाटा तु चतुरंगुला ।
द्वादशांगुलमानं स्याल्ललाटस्त्वंगुलस्तवः ॥ ३७५ ॥

द्वादशांगुलमानं तु स्तवं केचित्प्रचक्षते ।
कटे चाष्टांगुले प्रोक्ते केषांचिच्चतुरङ्गुले ॥ ३७६ ॥

शंखोऽगुलचतुष्कः स्यात्केषांचिद्द्व्यङ्गुलो मतः ।
षोडशांगुलमायातौ गण्डौ संपरिकीर्तितौ ॥ ३७७ ॥

सप्तांगुलं हनुचक्रे केषांचित् षोडशांगुले ।
चतुरंगुलं निगालं तु केचिदेकांगुलं विदुः ॥ ३७८ ॥

विदुरष्टांगुलायामौ केचिदूचुः षडंगुलौ ।
मन्यं ग्रीवाथ स्कन्धश्च केषां तच्च तथैव च(?) ॥ ३७९ ॥

तुल्यानि मानतो विद्यात् त्रिविधेष्वपि वाजिषु ।
ग्रीवामानं भवेत्त्रिंशद्वहः स्याच्चतुरङ्गुलः ॥ ३८० ॥

चतुर्विंशांगुलं तु स्याज्जत्रुकं शास्त्रसंमतम् ।
षडंगुला काकशा तु ककुदं स्यात् षडंगुलम् ॥ ३८१ ॥

द्वात्रिंशदंगुलं पृष्ठं केचित्तु त्रिंशदंगुलम् ।
कण्ठस्य मानं मन्यवद् वक्षो द्वात्रिंशदंगुलम् ।
क्रोडं षडंगुलं ज्ञेयं बाहू चाष्टादशांगुलौ ॥ ३८२ ॥

जान्वोश्च मानं विज्ञेयं शास्त्रज्ञैश्चतुरंगुलम् ।
जान्वोरधस्तात्कूर्चान्ताज्जंघा स्यात् षोडशांगुला ॥ ३८३ ॥

कूर्चः षडंगुलो ज्ञेयः कुष्ठिका च षडंगुला ।
षडंगुलश्च विज्ञेयं शफमित्युच्यते बुधैः ॥ ३८४ ॥

चतुरंगुलमानौ तु कक्षौ संपरिकीर्तितौ ।
घ्यङ्गुलं हृदि निष्ठो च द्वादशांगुलमायतम् ॥ ३८५ ॥

त्र्यंगुलं हृदयं केचित्तुरगाणां प्रचक्षते ।
विंशत्यंगुलमानं तु जठरस्य प्रकीर्तितम् ॥ ३८६ ॥

हृन्नाभ्योरन्तरं केचिद्वदन्ति त्रिदशांगुलम् ।
ककुदं च द्व्यंगुलं स्यात्केचित्त्र्यंगुलं विदुः ॥ ३८७ ॥

दशांगुलप्रमाणं तु त्रिकं ज्ञेयं विचक्षणैः ।
अष्टाविंशत्यङ्गुलं तु जघनं परिकीर्तितम् ॥ ३८८ ॥

अष्टाविंशत्यंगुला तु वर्तिका परिकीर्तिता ।
गुदं तु घ्यङ्गुलं विद्यात्केचित्तचतुरङ्गुलम् ॥ ३८९ ॥

जायते तुरगाणां तु सृक्किपण्डश्चतुरङ्गुलः ।
द्वात्रिंशदङ्गुला ज्ञेया तुरगाणां च सावनीम् ॥ ३९० ॥

कट्वामानं सावनीवक्ष्या शास्त्रज्ञैः परिकीर्तितम्(?) ।
मुष्कबन्धनमानं तु त्र्यङ्गुलं वाजिनो मतम् ॥ ३९१ ॥

समौ विल्वोपमौ मुष्कौ मेहनं द्वादशांगुलम् ।
त्र्यङ्गुलो मूत्रकोशः स्यान्नाभिस्तद्वत्प्रकीर्तिता ॥ ३९२ ॥

मरुर[द्व]शांगुलो ज्ञेयः पश्चाच्छ्रोरुरुत्तरः ।
तुरङ्गमाणां विज्ञेये स्थूरे पञ्चांगुले बुधैः ॥ ३९३ ॥

वर्ष्मायामप्रमाणस्था मांसैर्देहाश्रयैर्युताः ।
समकाया निरुदरा मनोनयननन्दनाः ॥ ३९४ ॥

समा श्रोणिषु संवृत्ताश्चतुरस्रास्सुसंहताः ।
अङ्गप्रत्यङ्गसंपूर्णाः सर्वाङ्गेष्वभिपूजिताः ।
शीलवन्तो बलोपेताः वयस्थाश्शुभदर्शनाः ॥ ३९५ ॥

ग्रीवास्कन्धौ च वंशश्च समा येषां प्रमाणतः ।
वक्त्रसक्थि च वक्षश्च यस्य जंघा समं तथा ॥ ३९६ ॥

खुरश्च कुक्षिकाश्चैव समा यस्य प्रमाणतः ।
एते मेया ह्यविकृताः सान्नाह्याः सुभगा हयाः ॥ ३९७ ॥

एवं विधो भवेद्यस्तु स विज्ञेयः स[प्र]माणवान् ।
ईदृशाःस्युर्गुणा हीमे यस्यामौ मानमर्हति ॥ ३९८ ॥

वयस्थश्चाविकारी च शोभां भिन्नबलिं गतः ।
समश्च सुविभक्तश्च माङ्गल्योऽविकलश्च यः ॥ ३९९ ॥

बधिरा ये जडा मूका जात्यन्धाःकोपमेहिनः ।
नपुंसका हयाश्चैव तथा भूतोपसर्गिणः ॥ ४०० ॥

प्रकृत्या चैव हीनाङ्गा विकलास्ते प्रकीर्तिताः ।
कुब्जा हीनमुखग्रीवः संक्षिप्तोऽत्यर्थमायतः ।
उपरिष्टाद्विशालः स्यादुरोहीनस्तथैव च ॥ ४०१ ॥

पूर्वकायाधिको यश्च नतपृष्ठस्तथैव च ।
अत्यर्थदीर्घग्रीवश्च तथा हीनकटिश्च यः ॥ ४०२ ॥

अङ्गप्रत्यङ्गविषमा अमेया विकृता हयाः ।
न मेया न च सान्नाह्या विकृता दुर्बलाश्च ते ॥ ४०३ ॥

उक्तं गजपरिच्छेदे यद्यद् लांगूललक्षणम् ।
तदत्रापि च विज्ञेयं वाजिमाने विचक्षणैः ॥ ४०४ ॥

अथ शोभां प्रवक्ष्यामो हयानां पञ्चधा स्थिताम् ।
आहारपरिणामोत्थां मानयोग्यतृतीयकम् ॥ ४०५ ॥

आहारगुणनिर्वृत्या हयानां मांससंचयः ।
यस्मात् शोभयते देहं तस्मात् शोभा स्मृता बुधैः ॥ ४०६ ॥

अन्नपानोपयोगेभ्यः तृणधान्योदकैः हितैः ।
क्षीरैश्च प्रतिपानैश्च तथाहारैश्चतुर्विधैः ॥ ४०७ ॥

अश्वानां पुष्टिराख्याता स्नेहेन लवणेन च ।
सालोहिता तु प्रथमा द्वितीया पक्षलेपिनी ॥ ४०८ ॥

ततो भिन्नबली ज्ञेया तृतीया हयकायजा।
भिन्नमांसा चतुर्थी स्याद्द्रोणा शाभा तु पञ्चमी ॥ ४०९ ॥

आषोडश चतुर्थात्स्युर्वर्षाच्छोभास्तुरङ्गमे।
जिह्वानयनपर्यन्तौ सूना सृक्क च तालु च(?) ॥ ४१० ॥

चन्द्रो मेढ्राण्डकोशश्च वलय पार्श्ववक्षसः।
ऊर्वन्तरविभागश्च ककर्णौ नासिकापुटौ ॥ ४११ ॥(?)

एते प्रदेशाःस्युरुक्ता बहुसूत्रत्वमेव च।
तनुमांसोपदिग्धो यो मृदुमांसश्च वर्णवान् ॥ ४१२ ॥

स लोहित इति ज्ञेयो हयःप्रथमशोभकः।
समपार्श्वोदरो यः स्यान्मांससंभृतपार्श्वकः ॥ ४१३ ॥

अंसो वंशस्तथा क्रोडं ओमसन्धिश्च वाजिनः।(?)
ग्रीवा वक्षश्च मांसैस्तु सूपलिप्ताश्च सर्वतः ॥ ४१४ ॥

स्कन्धे चोरसि वाहस्य वलयः पुरुषच्छवेः।(?)
लिप्तपक्षेति तामाहुः द्वितीयां शोभिकामिह ॥ ४१५ ॥

मांसोपचयविस्तीर्णा वलयो भिन्नरूपिणः।
ऊरू च वालधानं च वक्षोवंशांससन्धयः ॥ ४१६ ॥

ओमा च मग्नमांसैस्तु स्कन्धश्च भृशमाचितः।
एषा भिन्नबली नाम्ना तृतीया शोभिका हये।
पार्श्वोदरमुरश्चैव बालव्यूहस्त्रिकं तथा ॥ ४१७ ॥

वृत्तमांसोपचय....मग्नाःसर्वास्थिसन्धयः।
ओमावंशस्तथा वंशः समसूपचितो भवेत् ॥ ४१८ ॥

स भिन्नमांसो विज्ञेयश्चतुर्थी शोभिका च सा।
जाङ्गलं पाण्डुभागं च मांसैर्विभजितैरिव ॥ ४१९ ॥

पृष्ठवंशस्य पार्श्वाभ्यां मांसमत्युच्छ्रितं स्थिरम्।
द्रोणा भवति पृष्ठे च सर्वाङ्गोपचिता दृढः ॥ ४२० ॥

पञ्चमी द्रोणिका द्वे(त्वे)षा शोभा निर्दिश्यते परा ।
पञ्चमीतः परं यस्य मांसकाये प्रवर्धते ॥ ४२१ ॥

स मेदुरोऽश्वो विज्ञेयो मांसवृद्ध्या तु सर्वतः ।
स्थूलश्वासः स भवति गुरुप्रक्रमणो हयः ॥ ४२२ ॥

न कर्मकाले योद्धाऽसौ न च पृष्ठेन चाधनिः ।(?)
अभिसंपन्नमांसस्य विकारोऽप्युपजायते ॥ ४२३ ॥

उष्णं न सहतेऽत्यर्थं छायाकामः पिपासितः ।
भिन्नं पुरीषं सृजति बहुमूत्रो न चाशुगः ।
मात्रया योजयेत्तस्मात्क्षीणमश्वं यथाक्रमम् ॥ ४२४ ॥

अत्यर्थशोभां क्षपयेत् युक्तां शोभां च रक्षयेत् ।
शोभाः पञ्च हये प्रोक्ता वाजिशास्त्रानुसारतः ॥ ४२५ ॥

अत.परं प्रवक्ष्यामः स्वेदो यैः कारणैर्भवेत् ।
वहतां वाजिनां वेगात्स्वेदो भवति कर्मणा ॥ ४२६ ॥

वाततः पित्ततश्चैव श्लेष्मतश्च तृतीयकः ।
वातिको मधुवर्णस्तु प्रशस्तो वाजिनां सदा ॥ ४२७ ॥
पित्तजस्तैलवर्णस्तु प्रशस्तः सोऽपि कीर्तितः ।
पाण्डरः श्लेष्मजोऽपथ्यं सदानिष्टश्च वाजिनाम् ॥ ४२८ ॥
संसृष्टस्त्रिभिरेतैस्तु स्वेदो ज्ञेयस्त्रिदोषजः ।
अथोच्यते तुरङ्गाणां प्रदेशेषु शुभाशुभम् ॥ ४२९ ॥
लक्षणं हयशास्त्रज्ञसंमतं मुनिभाषितम् ।
मुखं प्रसिद्धं तुंगं च चतुरस्तं(स्रं) समाहितम् ॥ ४३० ॥
ऋजु तन्वायतं चैव तुरगस्य प्रशस्यते ।
विपरीतमतः स्याच्चेदप्रशस्तं च तद्भवेत् ।
आस्यं च संवृतं श्लिष्टं सुमहच्च सुगन्धि च ॥ ४३१ ॥
अकालपोथशुष्कं च तुरगस्य प्रशस्यते ।
तदास्यं शस्यते यच्च लाजास्यमिव पाटितम् ॥ ४३२ ॥

विपरीतगुणं चास्यमशुभं परिकीर्त्तितम् ।
जिह्वा तन्वी चला भद्रा गुरुर्दीर्घा समाहिता ॥ ४३३ ॥(?)

मृदुश्लक्ष्णा च रक्ता च श्वजिह्वेव प्रशस्यते ।
यत्र क्वचिद्धवेतावत्कृष्णजिह्वास्तुरङ्गमाः ॥ ४३४ ॥

तेनार्था न प्रवर्ध[ध्य]न्ते कुलान्तकरणश्च सः ।
अल्पेनापि स कृष्णेन कुलान्तकरणश्च सः ।
बहुजिह्वस्तु यो वाजि[जी] स्वामिनं घातयेत्तु सः ॥ ४३५ ॥

यमजिह्वश्च यो वाजि[जी] भर्तुरर्थापहश्च सः ।
स्निग्धं तालु सुगम्भीरं रक्तं तनु च पूजितम् ॥ ४३६ ॥

तीव्ररागं बहुव्यापि स्निग्धं चापि महाफलम् ।
बालार्कसदृशं यच्च शोणपद्मदलोपमम् ॥ ४३७ ॥

प्रवालाङ्कुरवर्णं वा स्निग्धं तालु महाशुभम् ।
अर्थसिद्धिकरं भर्तुरारोग्यप्रदमुत्तमम् ।
श्वेतादयो न शस्यन्ते वर्णाः सर्वे च तालुनि ॥ ४३८ ॥

तालुकैः कृसरैर्वापि बिन्दुभिश्चित्रितं सदा ।
यस्य तत्तालु कल्माषं सोऽश्वः क्लेशकरो भवेत् ॥ ४३९ ॥

यत्कृष्णरेखया व्याप्तं प्रान्ते मध्येऽप्यनिन्दितम् ।
परिणद्धं च तत्तालु भर्तुःक्लेशावहं च तत् ॥ ४४० ॥

तिलच्छायं च यत्तालु कृसरं तत्प्रचक्षते ।
गृहनाशं वित्तनाशं निर्दिशेत्तेन तालुकम् ॥ ४४१ ॥

तालुदेशो भवेद्यस्य कृष्णः सोऽश्वः पराजयम् ।
निर्दिशेत्स्वामिनस्तस्माद्वर्जयेत्तं रणे नृपः ॥ ४४२ ॥

भर्तुर्वधोऽर्धकृष्णे च तिर्यक्कृष्णे च वामतः ।
राज्ञो बन्धनमादेश्यं दक्षिणे तु सुतक्षयः ॥ ४४३ ॥

निर्वाणाङ्गारवर्णाभे राज्यभ्रंशं समादिशेत् ।
कालतालुर्भवेद्यस्तु तं चापि तुरगं बुधः ॥ ४४४ ॥

न क्रीडायाश्च गृह्णीयात्कुलश्रेष्ठं निहन्ति सः ।
अग्राह्यः कीर्तिनस्तस्मात्तुरगः कालतालुकः ।
तमारुह्य हयं याता न जीवति कदाचन ॥ ४४५ ॥

समानवर्णे वर्णस्य तालु वाहस्य यद्भवेत् ।
एकवर्णेतथा तस्य फलमल्पं प्रचक्षते ॥ ४४६ ॥

सुनासयुक्तोत्पतिता श्लक्ष्णा रक्ता समाहिता ।
स्थिरा निरूपदिग्धा च स्निग्धवर्णा च पूजिता ॥ ४४७ ॥

दशनाश्च समा वृत्ताः सुस्निग्धाभ्यन्तरोन्नताः ।
अनुन्नताश्च सुव्यक्तव्यञ्जनाः संहता दृढाः ॥ ४४८ ॥

स्वभावान्मधुवर्णाश्च तुरगस्याभिपूजिताः ।
अचितैर्दशनैर्वाजी भर्तुःसर्वार्थनाशकः ॥ ४४९ ॥

वाजिनाशुचिदन्तेन पानस्यान्नस्य च क्षयः ।
वक्त्रजैर्मुकुलैर्वाजी विज्ञेयो वित्तनाशनः ॥ ४५० ॥

द्विजैस्तु विषमैर्वाजी पुत्रघ्नः परिकीर्तितः ।
द्वितीयवर्षमारभ्य यावत्पञ्चमवत्सरम् ॥ ४५१ ॥

उत्पत्तिकालो दन्तानां मुनिभिः परिकीर्तितः ।
पञ्चमान्तेऽपि चेद्दन्ताः कतिचिन्नैव वाजिनः ।
हीनदन्तः स विज्ञेयो मित्रघ्नो दारदूषण ॥ ४५२ ॥

उभाभ्यां दन्तपालिभ्यां यस्यैकोऽभ्यधिको भवेत् ।
तं करालं विजानीयादधरोत्तरसंज्ञितम ॥ ४५३ ॥

अधरेषु करालेषु [उ]युभयं भर्तुरादिशेत् ।(?)
उत्तरेषु करालेषु भर्ता जीयेत शत्रुभिः ॥ ४५४ ॥

विरला विषमा दन्तास्तीक्ष्णाग्रा यस्य वाजिन. ।
स करालः कुलश्रेष्ठं निहन्यात्तुरगाधमः ॥ ४५५ ॥

तुरगोऽधिकदन्तश्च प्रजाघ्नो भर्तृनाशनः ।
अप्रशस्तेन रूपेण दन्तमूलादद्विजोऽधिकः ॥ ४५६ ॥

निर्गतो यस्य सोऽश्वस्तु कलिदन्तः कुलान्तकृत् ।
हातव्यपतने विद्यान्न शुभ नाशुभं फलम् ॥ ४५७ ॥

दंष्ट्रापतनभङ्गेषु लक्षणं कथ्यते पुनः ।
राजपत्नीवधं वामे दक्षिणे मन्त्रिदूषणम ॥ ४५८ ॥

उत्तराधरयोर्दंष्ट्रे भज्येते यस्य दक्षिणे ।
ताभ्यां मन्त्रिक्षयं विद्याद्वामायां मन्त्रिदूषणम् ।
उत्तरा दक्षिणा यस्य वामाप्यधरजा पतेत् ॥ ४५९ ॥

ताभ्यां जनपदो नश्येदधराभ्यां पुरक्षयः ।
यथात्वधरजे दंष्ट्रे भज्येते वाजिनः समे ॥ ४६० ॥

पार्थिवस्याभिषिक्ताया देव्यास्तत्र वधो भवेत् ।
यस्यैव तूत्तरा दंष्ट्रा भज्यतेऽश्वस्य दक्षिणे ॥ ४६१ ॥

युवराजवधायैषा राजकन्यावधाय वा ।
दंष्ट्राणां तिसृणां भङ्गे नृपतेर्वधमादिशेत् ॥ ४६२ ॥

दंष्ट्राश्चतस्रो भज्यन्ते युगपद्यस्य वाजिनः ।
सामात्यस्य सराष्ट्रस्य राज्ञस्तस्य भयं भवेत् ॥ ४६३ ॥

दक्षिणे चोत्तरे दंष्ट्रे द्वे चाप्यधरजे समे ।
भज्येते युवराजो वा राजा वाथ विनश्यति ॥ ४६४ ॥

स दंशस्तूत्तरो यस्य युगपद्भज्यते यदा ।
क्षुद्भयं तत्र जानीयात्पुरे राष्ट्रे च दारुणम् ॥ ४६५ ॥

अमङ्गल्यश्च सोऽप्यश्वो न भवेद्राजवाहनः ।
यागाश्वेषूत्तमाश्वेषु फलं संपूर्णमिष्यते ।
मध्यमे फलमर्धं स्याच्छेषे स्वल्पफलोदयः ॥ ४६६ ॥

व्याधिना जरया चैव भङ्गेषु पतनेषु च ।
दन्तानां नाशुभं ज्ञेयमेकद्विपतनेऽपि वा ॥ ४६७ ॥

यत्तु कल्पे वयस्थे वाप्यकस्मादभिघाततः ।
पतनं मुनिभिस्तावदशुभं परिकीर्तितम् ॥ ४६८ ॥

तिथिनक्षत्रयोगेषु लघुष्वथ शिवेषु च ।
फलादयो यथो[द्दि]दिष्टः स एवाल्पफलो भवेत् ॥ ४६९ ॥

सुवर्णगोप्रदानैश्च द्विजानां तर्पणेन वा ।
शान्तिपुण्याहहोमैश्च शमयेद्यत्नवान्नृपः ॥ ४७० ॥

चतुरस्रं समं वृत्तं प्रमाणं शुभमिष्यते ।
विपरीतगुणं भर्तुः सर्वानर्थकरं भवेत् ॥ ४७१ ॥

प्रोथस्समो मृदुर्वृत्तो गुरुः श्लक्ष्णस्समाहितः ।
तनुर्मध्योन्नतश्चैव सुश्लिष्टस्य (श्च) प्रशस्यते ॥ ४७२ ॥

कृष्णप्रोथश्च यो वाजी स्वामिनं बान्धवैस्सह ।
स नाशयति वेगेन तस्मात्तं परिवर्जयेत् ।
उष्णोच्छ्वासौ महान्तौ च संवृत्तौ मृदुलौ समौ ॥ ४७३ ॥

वृत्तौ श्लक्ष्णौ च विज्ञेयौ प्रशस्तौ नासिकापुटौ ।
विपरीतगुणौ तौ चेदप्रशस्तगुणौ बुधैः ॥ ४७४ ॥

तनुत्वग्रोमनिर्मांसा घोणा वाहस्य पूजिता ।
समांसा रूक्षरोमत्वक् न प्रशस्ता च वाजिनः ॥ ४७५ ॥

ओष्ठौ श्लक्ष्णौ न वलितौ मृदुकौ पीनसंस्थितौ ।
नातिलम्बौ प्रशस्तौ च दशनाच्छादनावुभौ ॥ ४७६ ॥

वक्त्रौ च वलितौ रूक्षौ लम्बमानौ च दुःखदौ ।
कृष्णोष्ठः स्याच्च भर्तृघ्नः तस्मात्तं परिवर्जयेत् ॥ ४७७ ॥

सृक्कणी महती पूज्ये सुश्लिष्टे संवृते घने ।
समे च्छिद्रे च ऋजुनी वैपरीत्येऽवहारके ॥ ४७८ ॥

सृक्कणी च यदा कृष्णे स्वामिनो वधबन्धनम् ।
निर्दिशेच्च तदा विद्वान् तस्मात्तं परिवर्जयेत् ॥ ४७९ ॥

समं निरूपदिग्धं च रोमशं चिबुकं शुभम् ।
विपरीतगुणं चेत्स्यात्स्वामिनोऽनर्थकारकम् ।
मग्नमांसशिरास्नायू अश्रुपाते शुभे मते ॥ ४८० ॥

विपरीते तु ते भर्तुः सर्वानर्थकरे मते ।
मणिवैडूर्यवर्णाभे विशाले मधुसन्निभे ॥ ४८१ ॥

स्निग्धे हिरण्यसदृशे शुद्धे च स्फटिकप्रभे ।
मल्लिकाभे सय्यु(मयू)रोष्ट्रकलविङ्काक्षिसन्निभे ॥ ४८२ ॥(?)

क्रौञ्चतित्तिरिनेत्राभे वारणाक्षिनिभे तथा ।
कुरङ्गहंसनेत्राभे टिट्टिभाक्षिनिभे तथा ॥ ४८३ ॥

महती तनुपक्षान्ते श्वेते कृष्णान्तरे तथा ।
पारावताक्षिप्रतिमे प्रशस्ते हयलोचने ॥ ४८४ ॥

एवंविधानि नेत्राणि येषां स्युर्वाजिनां पुनः ।
भर्ता तेषां च विजयी सर्व(कामा)कर्मार्थदाश्च ते ॥ ४८५ ॥

अस्थूलान्यक्षिकूटानि शुभान्यविषमाणि च ।
भर्तुरर्थहराणि स्युः स्थूलानि विषमाणि च ॥ ४८६ ॥

पृथुः स्निग्धा समा चैव मल्लिकापुष्पसन्निभा ।
राजी यस्य च पर्यन्ते सुपरिक्षिप्ततारके ।
स हयो मल्लिकाक्षस्तु दृष्टिर्यस्य च कालिका ॥ ४८७ ॥

तेन मित्राणि वर्धन्ते कोशाश्च स्वामिनस्तथा ।
काकाक्षान् गृध्रनेत्रांश्च दूरतः परिवर्जयेत् ॥ ४८८ ॥

प्रियास्तेन प्रदुष्यन्ति कोशो भर्तुश्च दीर्यते ।
संग्रामे तैश्च यो गच्छेन्न स जीवन्निवर्तते ॥ ४८९ ॥

ये तु रूक्षविशालाक्षा भेकाक्षा मधुपिङ्गलाः ।
मूषिकोलूकमत्स्याक्षा वराहवृषभेक्षणाः ॥ ४९० ॥

जिह्माक्षाः क्रूरनेत्राश्च पिङ्गलाक्षाश्च वाजिनः ।
अनिर्वृतिकरा भर्तुः कुलान्तकरणाश्च ते ॥ ४९१ ॥

जीवान्ते चैव संग्रामे भर्तारं घातयन्ति ते ।
शुभं शुभेतरं चैव नयनं यस्य वाजिनः ॥ ४९२ ॥

शुभैकाक्षं तु त विद्याद्दुःशीलं कलहप्रियम् ।
एकं प्रशस्तमेकं च विरूपं यस्य लोचनम् ॥ ४९३ ॥

संग्रामे वर्जयेत्तं तु सूकरं(लं) कलहप्रियम् ।
दृष्टी तन्वायते श्लक्ष्णे नोत्वणे च समे शुभे ।
अधोगते च ये दृष्टी विपरीते च नो शुभे ॥ ४९४ ॥

घाटे शुभे च निर्मांसे तनुरोमत्वचे (ची) च ये ।
सर्वानर्थकरे भर्तुः मांसले रूक्षरोमणी ॥ ४९५ ॥

ललाटमायतोत्तानं निर्मांसं पृथुलं समम् ।
आनुपूर्व्यायतं चैव निर्वलीकं च पूजतम् ॥ ४९६ ॥

यशोऽर्थकुलरत्नानां स्वामिनश्च विवर्धनम् ।
इतस्तु विपरीतं चेदशुभं परिकीर्तितम् ॥ ४९७ ॥

गोविषाणाग्रसंस्थानं करीराग्रोपमं तथा ।
चर्मलीलाकृति तथा चूतस्यास्थिनिभं तथा ॥ ४९८ ॥

करांगुलिनिभं वापि स्थूलं वाप्यथवा कृशम् ।
कठिनं मृदु वा ह्रस्वं दीर्घं वापि च यत्पुनः ॥ ४९९ ॥

ललाटे सटमध्ये वा मस्तके वा स्तुवेऽपि वा ।
अतोऽन्यतमसंस्थानमतोऽन्यतमदेशजम् ॥ ५०० ॥

यस्य तं शृङ्गिणं विद्याद्राष्ट्रभर्तृविनाशनम् ।
यस्मिंस्तु देशे सोऽश्वस्तु स च देशो विनश्यति ।
तस्मात्तं च रिपोर्देशे त्यक्त्वा शान्तिं प्रयोजयेत् ॥ ५०१ ॥

मांसकीलं च तं छित्वा सुवर्णेनाग्निरूपिणम् ।
तत्स्थाने च दहेद्वह्नौ हुत्वा संपूज्य च द्विजान् ॥ ५०२ ॥

तमश्वं प्रतिगृह्णीयादिति कश्चित्प्रभाषते ।
न चास्य विद्यते किञ्चित्प्रतिघाताय लक्षणम् ॥ ५०३ ॥

इत्याह भगवान् गार्ग्यः तस्मात्तं परिवर्जयेत् ।
स्तुवस्तुल्योऽशुभिः केशैः विषमैर्मृदुभिस्तथा ॥ ५०४ ॥

वृत्तदीर्घतनुस्निग्धैरुपेतस्त्वभिपूजितः ।
इतोऽन्यथा गुणो भर्तुः सर्वानर्थकरो भवेत् ॥ ५०५ ॥

शिरस्समं सुवृत्तं च शस्तं निन्द्यमतोऽन्यथा ।
ह्रस्वता कर्णयोश्चैव मृदुता तीक्ष्णता तथा ॥ ५०६ ॥

न दीर्घरोमता चैव प्रशस्तेति प्रकीर्तिता ।
इतस्तु विपरीतौ यौ कर्णौ तौ न शुभप्रदौ ॥ ५०७ ॥

त्रिकर्णो च परित्याज्य इति शास्त्रविदां मतम् ।
केशैर्यस्य प्रकीर्णैस्तु सीमन्त इव दृश्यते ।
तं मुक्तकेशमारुह्य शूरः कापुरुषो भवेत् ॥ ५०८ ॥

आमण्डलौ श्लिष्टमासौ मग्नस्नायू शुभौ करौ ।
इतोऽन्यथागुणौ तौ च भर्तुस्सर्वार्थहारकौ ॥ ५०९ ॥

मग्नमांससिरास्नायू शंखौ शस्तौ समौ च तौ ।
इतोऽन्यथागुणौ तौ च भर्तुः सर्वार्थहारकौ ॥ ५१० ॥

आनुपूर्व्यायतौ गण्डौ [नो]नेल्बणौ च समौ शुभौ ।
तनुरोमत्वचौ भर्तुरन्यथा हानिदौ मतौ ॥ ५११ ॥

आयते च हनूचक्रे चक्रवृत्ते घने शुभे ।
युक्तानुपूर्वोपचिते विपरीते च हानिदे ॥ ५१२ ॥

समश्च नोपदिग्धश्च निगालो विषदः शुभः ।(?)
अतस्तु विपरीतो यो निगालस्सोऽशुभो मतः ॥ ५१३ ॥

नोल्बणौ निचितौ चैव विदू वाहस्य कीर्तितौ ।
विपरीतगुणौ तौ च स्वामिनोऽकीर्तिदौ मतौ ॥ ५१४ ॥

ग्रीवा शुभान्तरा श्लिष्टा वृत्ता सन्धिसमाहिता ।
उच्चैर्विद्धा विदौ वृत्ता तथा शिरसि चोद्धता ।
क्रुद्धाहिभोगप्रतिमा यस्याश्वस्य समुत्थिता ॥ ५१५ ॥

ग्रीवा शिखिसमानाभा शक्रायुधनिभाऽपि वा ।
सुग्रीवनामा तुरगः स भवेद्राजसाह्वयः ॥ ५१६ ॥

विपरीतगुणा ग्रीवा भर्तुस्सर्वार्थहारिका ।
स्कन्धस्तु परिसंपूर्णः श्लिष्टमांसः पृथुश्शिराः(?) ॥ ५१७ ॥

बहुमांसः सुसंश्लिष्टः स्थिरमांसश्च पूजितः ।
विपरीतगुणः स्कन्धो भर्तुस्सर्वार्थहारकः ॥ ५१८ ॥

केसरं च मृदु स्निग्धं वाजिनः शुभदं मतम् ।
आजन्मकेसरं यस्य वाजिनो नैव जायते ॥ ५१९ ॥

भर्तुः कुलवधं कृत्वा ततः पश्चाद्विनश्यति ।
सुश्लिष्टौ गूढजतुकौ काकसादौ सुसंहितौ ॥ ५२० ॥

भर्तुर्यशोवृद्धिकरौ विपरीतौ च दुःखदौ ।
परिपूर्णसमं पीनं ककुदं शुभमिष्यते ॥ ५२१ ॥

आयतं पृथु संश्लिष्टं युक्तमांसं च पूजितम् ।
विपरीतगुणं यच्च ककुदं तच्च दुःखदम् ।
पृष्ठ्वासनं च सुखदं विपरीतं च दुःखदम् ॥ ५२२ ॥

पृष्ठमंगुष्ठविनतं रज्जुवंशसमन्वितम् ।
विनतं च प्रशस्तं स्यात्परिपूर्णं दृढं पृथु ॥ ५२३ ॥

विपरीतगुणं पृष्ठं भर्तुस्सर्वार्थहारकम् ।
अंसौ पीनौ समौ श्लिष्टौ पृथुलौ चाभिपूजितौ ॥ ५२४ ॥

विपरीतगुणौ तौ च भर्तुरत्यन्तदुःखदौ ।
कण्ठो वृत्तः समश्लिष्टः पूजितस्तनुरायतः ॥ ५२५ ॥

इतोऽन्यथागुणः कण्ठो भर्तुस्सर्वार्थहारकः ।
स्थूलास्थि पृथुलोत्तानं विशालं बहुलं स्थिरम् ॥ ५२६ ॥

उरः पीनं प्रशस्तं स्याद्विपरीतं च दुःखदम् ।
क्रोडो महत्तरः स्थूलः प्रशस्तो दुःखदो मतः ॥ ५२७ ॥

बाहू दीर्घौ च पीनौ च घनौ वृत्तावृजू समौ ।
विभक्तौ चानुपूर्व्या च श्लिष्टसन्धी च पूजितौ ॥ ५२८ ॥

इतोऽन्यथागुणौ तौ च पातुस्सर्वार्थनाशनौ ।
जानुनी च समे वृत्ते निर्मांसे सुस्थिरे घने ।
समाहिते प्रतिच्छन्ने समश्लिष्टे च पूजिते ॥ ५२९ ॥

इतोऽन्यथागुणे ते च भर्तुरत्यन्तदुःखदे ।
जंघे वृत्ते च दीर्घे च निर्मांसे ऋजुके घने ॥ ५३० ॥

मग्नस्नायुसिराश्लिष्टे विशुद्धे चाभिपूजिते ।
विपरीतगुणे जंघे पातुस्सर्वार्थहारके ॥ ५३१ ॥

अस्थूलगूढसन्धीका दीर्घा तीक्ष्णा च पूजिता ।
प्रतिच्छन्ना कलाश्लिष्टा विपरीता च दुःखदा ॥ ५३२ ॥

कूर्चौ मृदू प्रतिस्तब्धौ वृत्तौ ह्रस्वौ सुपजितौ ।
विपरीतगुणौ तौ च पातुस्सर्वार्थनाशनौ ॥ ५३३ ॥

कुष्ठिका च समा वृत्ता ह्रस्वा श्लिष्टा समाहिता ।
ईषन्मध्योन्नता चापि प्रतिच्छन्नसिरा तथा ॥ ५३४ ॥

पूजिता विपरीता चेत्पातुरत्यन्तदुःखदा ।
खुरास्तु बहुलास्तुङ्गा वृत्ता ह्रस्वा दृढास्तथा ॥ ५३५ ॥

समुद्गिरश्शिष्टपुटाः खरस्येव शफास्तथा ।
अवनीकाः समाः श्लिष्टा न खण्डस्फुटिताः स्थिराः ।
एकवर्णाःसिता रक्ताः कृष्णा वाप्यथ पूजिताः ॥ ५३६ ॥

तलमध्ये च गम्भीराः शिलातलनिभैस्तलैः ।
निमग्नह्रस्वमण्डूका विभक्ता नखसन्धिषु ॥ ५३७ ॥

कठिनानेकवर्णाश्च वृत्ताय:खण्डसन्निभाः ।
समाः श्लक्ष्णास्समन्ताच्च पादरोगैर्विवर्जिताः ॥ ५३८ ॥

खुरा यस्य प्रदृश्यन्ते रोमच्छन्नास्समन्ततः ।
आच्छादको नाम हयः स गृहे यस्य तिष्ठति ।
तेन मित्राणि वर्धन्ते वसुमान् पुत्रपौत्रवान् ॥ ५३९ ॥

द्विखुरं गोखुराकारैः खुरैर्विद्याद्विचक्षणः ।
अथवा सावनीयुक्तैर्निम्नमध्यैश्च निर्दिशेत् ॥ ५४० ॥

अयं खलु न संग्राह्यो नृपेण शुभमिच्छता ।
न प्रशस्तः पञ्चशफः स त्याज्यो मुनिभिः स्मृतः ॥ ५४१ ॥

नृपं राष्ट्रं बलं सर्वं नाशयेन्नात्र संशयः ।
सुविलंबि सुवृत्तं च जठरं गतिपूजितम् ॥ ५४२ ॥

मण्डूककुक्षिस्तुरगो यश्च कूर्मोदरो भवेत् ।
सर्पोदरो यश्च भवेत् यश्च स्याड्डुडुभोदरः ॥ ५४३ ॥

यवमध्यो भवेद्यश्च यश्च स्यात्पिटकोदरः ।
(पेडा इति यस्य ख्यात पिटकः पेटकः पेटा इत्यमरः ।(?)
एते च सर्वे विज्ञेया वाजिनः स्वामिघातुकाः ॥ ५४४ ॥

दीर्घे च पार्श्वे निश्छिद्रे परिपूर्णे समे स्थिरे ।
वृत्ते मृदङ्गपट्टैव श्लिष्टमांसे सुपूजिने ॥ ५४५ ॥

विपरीतगुणे ते च पातुरत्यन्तदुःखदे ।
जघनं च महावृत्तं चतुरश्रं पृथुत्रिकम् ॥ ५४६ ॥

संवृतं सममच्छिद्रमुच्चैर्बन्धं च पूजितम् ।
विपरीतगुणं यच्च जघनं तच्च दुःखदम् ॥ ५४७ ॥

जघनं मग्न नीरोगं तुरगस्य प्रशस्यते ।
इतोऽन्यथागुणं तच्च तुरगस्य न शस्यते ॥ ५४८ ॥

पुच्छं वृत्तं च ह्रस्वं च बन्धमुच्चैस्समाहितम् ।
ऋज्वानुवर्तितं चैव मृदुवालं च पूजितम् ॥ ५४९ ॥

विपरीतगुणं पुच्छं पातुरर्थस्य हारकम् ।
आजन्म वाजिनो यस्य वालो नैव च जायते ॥ ५५० ॥

भर्तुःकुलवधं कृत्वा स च पश्चाद्विनश्यति ।
मूले निमग्ना वृद्धा च तन्वावर्ता च वर्तिका ॥ ५५१ ॥

पूजितात्यर्थदीर्घा च स सादयति तत्कुलम् ।
गुदं च वृत्तं ह्रस्वं च सुखदं परिमण्डलम् ॥ ५५२ ॥

इतोऽन्यथागुणं भर्तुः विपरीतफलप्रदम् ।
स्फिक्पिण्डौ तु समौ पीनौ घनौ वृत्तौ समाहितौ ॥ ५५३ ॥

संपिण्डितौ न विक्षिप्तौ तुरगस्याभिपूजितौ ।
अतोऽन्यथागुणौ तौ च भर्तुरन्य(र्थ)स्य नाशनौ ॥ ५५४ ॥

गुरुस्समाहिता श्लक्ष्णा समा दीर्घा च सावनी ।
पूजिता विपरीता चेदसावत्यन्तदुःखदा ॥ ५५५ ॥

सुवृत्ता चैव पीना च कटिर्द्धन्या प्रकीर्तिता ।
इतोऽन्यथा या तु भवेदधन्या सा प्रकीर्तिता ॥ ५५६ ॥

समौ समाहितौ श्लिष्टौ नोल्बणौ वृषणौ शुभम् ।
वृत्तौ बिल्वप्रमाणौ च नलंबावतिपूजितम् ।
अमुष्कस्य यदाश्वस्य भवेन्मुष्कद्वयं पुनः ॥ ५५७ ॥

तदा भर्तुर्जयं विद्याद्राज्यलाभं च भर्तरि ।
विषमौ तु यदा मुष्कौ दृश्येते वाजिनस्समौ ॥ ५५८ ॥

सुनोत्पत्तिर्जयश्चैव महासिद्धिकरश्च सः ।
एकमुष्को यदा वाजी द्वितीयेनेह युज्यते ॥ ५५९ ॥

मित्रार्थलाभजननो भर्तुः कुलयशस्करः ।
द्वितीयाब्दात्समारभ्य यावत्पञ्चमवत्सरम् ॥ ५६० ॥

मुनिभिर्मुष्कयोश्चैव संभवो वाजिनां स्मृतः ।
यदा कालेन वाहस्य मुष्को नैवोपजायते ॥ ५६१ ॥

अमुष्क इति तं विद्यात्सर्वकर्मसु निन्दितम् ।
विरोधं नैव यो याति दृष्ट्वाशं [श्वं] मुष्कवर्जितम् ॥ ५६२ ॥

इन्द्रो वृद्धिः परित्याज्यो भर्तुःकुलविनाशनः ।
अमुष्कोऽश्वोऽतिमङ्गल्यः कपिमुष्कोऽर्थनाशनः ॥ ५६३ ॥

एकमुष्कः प्रभुं हन्यादधिमुष्कश्च भर्तृहा ।
हीनातिरिक्तवृषणो यस्य तिष्ठति वेश्मनि ।
पुत्रघ्नश्चापि भवति स्वामिनं चापि घातयेत् ॥ ५६४ ॥

रोमाञ्चिताभ्यां मुष्काभ्यां भर्तु कुर्याद्धनक्षयम् ।
विषमाभ्यां च मुष्काभ्यां कुर्याद्भर्तुस्सुतक्षयम् ॥ ५६५ ॥

द्वाभ्यां यस्य तु मुष्काभ्यामन्यः संदृश्यते पुनः ।
एको द्वौ वा त्रयो वाथ भर्तुस्तस्य महद्भयम् ॥ ५६६ ॥

व्याधिक्लेशौ मृतिश्चापि तेनाश्वेनैव जायते ।
द्वाभ्यामेव तु मुष्काभ्यामेकं नश्येत दक्षिणम् ॥ ५६७ ॥

तेन मित्रविनाशं च कुलनाशं विनिर्दिशेत् ।
वामे प्रणष्टे वृषणे भर्तुर्मृत्युभयं भवेत् ॥ ५६८ ॥

द्वाभ्यामेव प्रणष्टाभ्यां राजराष्ट्रभयं भवेत् ।
श्वेतः श्वेतानुवर्णो वा चित्रमुष्कस्तुरङ्गमः ॥ ५६९ ॥

स भर्तारं ससन्तानं घातयित्वा विनश्यति ।
मेढ्रं ह्रस्वं मृदु स्थूलं वृत्तं श्लक्ष्णं समं स्थिरम् ॥ ५७० ॥

महामुखं चैकवर्णं संवृतं चाभिपूजितम् ।
विपरीतगुणं मेढ्रं स्वामिनोऽत्यन्तदुःखदम् ।
कृष्णमेढ्रो भवेद्यस्तु भर्तृघ्नः स च कीर्तितः ॥ ५७१ ॥

समाहितः सुजातश्च न लंबो न च विद्युतः ।
मूत्रकोशः शुभोऽश्वस्य वृत्तः सुश्लिष्टमेहनः ॥ ५७२ ॥

मूत्रकोशस्य पार्श्वस्थौ स्तनौ गोस्तनसन्निभौ ।
यस्याश्वस्य स्तनीभा(स)स्यात् कृत्स्नराष्ट्रविनाशकः ॥ ५७३ ॥(?)

नाशयत्येष राजानं तस्मात्तं परिवर्जयेत् ।
नाभिर्वृत्ता शुभा स्निग्धा न निम्ना नैव चोल्बणा ॥ ५७४ ॥

जलावर्त इवावृत्ता सुश्लिष्टा चाभिपूजिता ।
विपरीतगुणा नाभिः पातुरत्यन्तदुःखदा ॥ ५७५ ॥

आनुपूर्व्यायतं पीनं शोभनं चोरुकद्वयम् ।
विपरीतमतः स्याच्चेद्विपरीतफलप्रदम् ॥ ५७६ ॥

जंघादयोऽप्यवयवाः पूर्वमुक्ता विशेषतः ।
तथैवापरकायस्य बोद्धव्यास्ते गुणान्विताः ॥ ५७७ ॥

बडवायाश्च वैशेष्यं कथ्यते ह्यधिकं च यत् ।
ऋजु पृथ्वायता श्रोणी स्वाचिता संभृता घना ।
प्रशस्ता विपरीता च विपरीतफलप्रदा ॥ ५७८ ॥

योनिश्शुभा मनोज्ञा च योनिदोषविवर्जिता ।
निर्मांसा पूतिगन्धा वा विरूपा दोषसंयुता ॥ ५७९ ॥

घनं सुजातं विपुलं सममूढः प्रशस्यते ।
विपरीतगुणं चेदं विपरीतफलप्रदम् ॥ ५८० ॥

नासन्नौ नातिविक्षिप्तौ शुभौ नातिविलंबिनौ ।
शस्तौ स्थिरौ सुवृत्तौ च सुक्षीरौ च समौ स्तनौ ॥ ५८१ ॥
विपरीतगुणौ तौ च भर्तुस्सर्वार्थहारकौ ।
अश्वस्य दक्षिणे पार्श्वे लक्ष्यतां तु शुभाशुभम् ॥ ५८२ ॥
वामेऽश्वायाश्च विज्ञेयं लक्षणं शस्तनिन्दितम् ।
एकैकशः प्रदेशानामुक्तं च शुभनिन्दितम् ॥ ५८३ ॥
अथोच्यते प्रदेशानां समवायगुणं फलम् ।
पायू जंघा विदू कायो जानुनी खुरकुष्ठिकाः ॥ ५८४ ॥
वर्तकोरू च दंष्ट्रा च दशांगं यस्य वाजिनः ।
वृत्तं भवति सोऽश्वः स्यादायुष्मान् राष्ट्रभृत्तथा ।
दीर्घाणि च प्रशस्यन्ते पार्श्वे ग्रीवा मुखं विदुः ॥ ५८५ ॥
बाहू जिह्वा च वालाश्च जंघा चाष्टौ हयस्य च ।
अष्टदीर्घो भवेच्छ्रेष्ठः सदा भवति तूर्णगः ॥ ५८६ ॥
प्रोथकर्णौ च पृष्ठं च वृषणौ कुक्षि(ष्ठि)काः खुराः ।
गुदो मेढ्रं च ह्रस्वाणि पूज्यन्तेऽष्टाविति स्थितिः ॥ ५८७ ॥

आरोग्यप्रकृतिस्त्वष्टह्रस्वो भवति नित्यदा ।
जिह्वाप्रोथोष्ठसृक्काणि वालरोमाणि केसरम् ॥ ५८८ ॥

सु(सू)ना चाष्टौ च पूज्यन्ते तनूनि च मृदूनि च ।
यस्याष्टौ च मृदूनि स्युः मृदुस्स स्यात्तुरङ्गमः ॥ ५८९ ॥

ललाटमासनं नेत्रे स्कन्धो वक्षस्तथा घ(क)टिः ।
उदरं सप्त चैतानि प्रशस्यन्ते पृथूनि च ॥ ५९० ॥

भवेत्सप्तपृथुर्योऽश्वः स बलिष्ठतमः स्मृतः ।
वदनं जघनं वक्षो नेत्रे नासापुटं शिरः ॥ ५९१ ॥

षडेतानि तुरङ्गाणां सुशुभानि महान्ति च ।
षण्महान्सत्वसंपन्नः सदा भवति तूर्णगः ।
दन्ता नेत्रे च कर्णौ च खुराश्चाथ स्वरास्तथा ॥ ५९२ ॥

स्निग्धान्येतानि पूज्यन्ते सदा पञ्चैव वाजिनाम् ।
पञ्चस्निग्धस्तथा स्वस्थस्तिग्मिश्चुश्चातिवीर्यवान् ॥ ५९३ ॥

पायुर्नासापुटौ मुष्कौ शस्यन्ते परिमण्डलाः ।
त्रिमण्डलश्च योऽश्वः स्याद्धृतिमान्स तुरङ्गमः ॥ ५९४ ॥

त्रीण्युत्तानानि श्रेष्ठानि ललाटं दन्तवक्षसी ।
भवेत्तु त्रिभिरुत्तानैः सारवांश्च तुरङ्गमः ॥ ५९५ ॥

योऽश्व लक्षणसंपन्नं स्थितं शुभकरं त्यजेत् ।
स्थानाद्भ्रंशमवाप्नोति तस्य भर्ता यथा हयः ॥ ५९६ ॥

यस्य कर्णौ प्रलम्बेने ललाटं भ्रुकुटीकृतम् ।
करालाश्चाधरा दन्ताः कुलश्रेष्ठं स खादति ॥ ५९७ ॥

यस्य मूले हनू रक्ते कर्णौ च परिमण्डले ।
अक्षिकूटे च विस्पष्टे अक्षिणी चाप्यधोमुखे ॥ ५९८ ॥

यस्यैनल्लक्षणं वाहं तं विद्यात्पादलक्षणम् ।
यस्तेन याति संग्रामं न स जीवन्निवर्तते ।
रोमशे च हनू रक्ते चिबुकं गण्डमेव च ॥ ५९९ ॥

स्थूलरोमजटाकेशं भर्तृघ्नं वर्जयेद्रणे ।
सर्वदोषविहीनोऽश्वो गुणैस्सर्वैश्च संयुतः ॥ ६०० ॥

दुर्लभोऽ[यं]ततो ह्यश्व अल्पदोषो गुणोत्कटः ।
दीप्तेन्धने यथा वह्नावीषदार्द्रमपीन्धनम् ॥ ६०१ ॥

नश्येत्तथा भूरिगुणे दोषः स्वल्पोऽपि नश्यति ।
बहुदोषं स्वल्पगुणं जह्यादश्वं प्रयान्ति हि ॥ ६०२ ॥

अब्धौ गङ्गाम्भस इव प्रविष्टस्य गुणाः क्षयम् ।
गुणदोषौ यत्र समौ तत्र मध्यफलं स्मृतम् ॥ ६०३ ॥

यथा शीतोष्णसंयोगे नात्यौष्ण्यं नातिशीतता ।
अथावर्तान्प्रवक्ष्यामो हयानां हयशास्त्रतः ॥ ६०४ ॥

तद्भेदस्थानमानानि शुभाशुभफलानि च ।
यथा हि मारुतावर्तो धरण्यां तृणसञ्चयम् ॥ ६०५ ॥

आवर्तयति वेगेन पांसु[ सूं ]श्चोद्धरन् भृशम् ।
एवमश्वस्य पवनो व्यानः सर्वशरीरगः ।
आवर्तयति रोमाणि तेनावर्ताः प्रकीर्तिताः ॥ ६०६ ॥

असंमते तु पवनः समानस्सर्वदेहगः ।
आवर्तयति रोमाणि तेनावर्ताः प्रकीर्तिताः ॥ ६०७ ॥

संस्थानमष्टधा तेषामावर्तानां तु कथ्यते ।
आवर्तः शुक्तिसंघातौ मुकुलं चावलीढकम् ॥ ६०८ ॥

पादुका पादुकार्धं च शतपादी तथाऽष्टमी ।
जलावर्त इवावर्त शुक्तिः शुक्तिरिवायता ॥ ६०९ ॥

एकाद्बहुसंस्थाना बहवः पिण्डिता यदि ।
रोमजाः स्युस्स संघातः समूह इति वा स्मृतः ॥ ६१० ॥

पद्मोत्पलकजातीनां मुकुलं मुकुलाकृति ।
गवाद्यवलीढसदृशं विज्ञेयमवलीढकम् ॥ ६११ ॥

पादुका पादुकाकारा तदर्धं चार्धपादुका ।
शतपादी च विज्ञेया शतपादवदास्थिता ॥ ६१२ ॥

एवमष्टविधोऽश्वानां रोमजः परिकीर्तितः ।
व्यतिरिक्तं च संस्थानाद्यदन्यदपि दृश्यते ।
सोऽपि रोमविकारः स्याद्भवेत्स्थाने शुभाशुभः ॥ ६१३ ॥

आवर्ता द्विविधा ज्ञेया ध्रुवाध्रुवविभेदतः ।
ध्रुवाध्रुवाणां संभूय त्रयोविंशाधिक शतम् ॥ ६१४ ॥

संख्यास्थानं च संभूय शतं स्यात्तु षडुत्तरम् ।
संख्यास्थाने ध्रुवाणां च भवेतां दशसंख्यके ॥ ६१५ ॥

अध्रुवाणां च संख्या स्यात्त्रयोदश शतं तथा ।
तेषां षण्णवतिस्स्थानान्येषां द्वैविध्यमुच्यते ॥ ६१६ ॥

शुभाशुभविभेदेन विंशतिः स्याच्छुभानि तु ।
षट्सप्ततिश्च निन्द्यानि इति षण्णवतिःस्मृताः ॥ ६१७ ॥

यान्यध्रुवाणां स्थानानि विंशतिः स्युः शुभानि तु ।
भवन्ति रोमजास्तेषु सप्तत्रिंशच्छुभावहाः ॥ ६१८ ॥

षट् सप्ततिश्च निन्द्यानि स्थानान्युक्तानि यानि तु ।
विनिन्द्या रोमजास्तत्र सप्ततिः षट् च संख्यया ।
स्थानात् स्थानं न गच्छन्ति जाताः तिष्ठन्ति ये ध्रुवम् ॥ ६१९ ॥

जाता(श्च)[श्चे] ये प्रजायन्ते रोमजास्ते ध्रुवा मताः ।
प्रपानस्थो ललाटस्थो मस्तके द्वौ तथोरसि ॥ ६२० ॥

रन्ध्रोपरन्ध्रे द्वौ द्वौ तु दशैतांस्तु ध्रुवान् विदुः ।
पुरा दिशः श्रितास्सर्वा हयेष्वावर्तनां गताः ॥ ६२१ ॥

अत्यर्थं पूजितास्त्वेते दशावर्तास्तु वाजिनाम् ।
ध्रुवो दक्षिणभागस्थः प्रपानस्थः प्रदक्षिणः ॥ ६२२ ॥

यस्यावर्तः स सौभाग्यं सव्यस्योर्ध[र्ध्वे] विशेषतः ।
ददाति स्वामिनश्चैव मध्यस्थो विजयं रणे ॥ ६२३ ॥

ललाटस्थो भ्रुवोर्मध्ये यस्यावर्तो ध्रुवस्थितिः ।
स दीर्घायुर्भवेद्वाजी स्वामिनश्च सुखावहः ॥ ६२४ ॥

वामभागश्रितश्चैव वामावर्तोऽथ मध्यतः ।
यस्यावर्तः प्रदृश्येत स दीर्घायुरिति स्मृतः ॥ ६२५ ॥

समौ कटस्योभयतो भ्रुवौ यस्य तु रोमजौ ।
द्व्यङ्गुले कर्णमूला च मस्तक्यौ सुप्रदक्षिणौ ॥ ६२६ ॥

स जीवेच्च चिरं वाजी भर्तुः कामार्थदश्च सः ।
यस्यावर्तौ च शुक्ती च उरस्थौ रोमजा[व]पि ।
यथाभिलक्षणे स्यातां स धन्यः शुभदस्सदा ॥ ६२७ ॥

यस्यावर्तौ प्रदृश्येते चन्द्र(रन्ध्र)योरुभयोरपि ।
चन्द्राख्यौ तु प्रशस्तौ तौ स्यातामायुर्विवर्धनौ ॥ ६२८ ॥

यस्योपचन्द्र(रन्ध्र)जौ स्यातामावर्तौ तु प्रदक्षिणौ ।
उपरिष्टात्तथा नाभेः स दीर्घायुर्धनावहः ॥ ६२९ ॥

विना प्रपानजेनाश्वो भर्तुः कुलविनाशनः ।
लालाटेन विना मोहो मूध्नि(र्ध्र)जाभ्यां शिरोरुजा ॥ ६३० ॥

तमश्वमन्तकं विद्यादमङ्गल्यं विशेषतः ।
पञ्चवर्षाण्यसौ नैव जीवेज्जावंश्च दोषभाक् ॥ ६३१ ॥

वक्षोजाभ्यां विना वाजी भर्तुः पुत्रवधाय च ।
रन्ध्रयोर्जठरे योगान्निर्धनश्चोपरन्ध्रयोः ॥ ६३२ ॥

यस्यापरन्ध्रौ विषमौ वामावर्तौ च रोगदौ ।
विन्यस्तौ स हयो भर्तुर्विज्ञेयो धननाशनः ॥ ६३३ ॥

छिन्नो विमूढो विन्यस्त आवर्तस्तिर्यगायतः ।
ऊनो वापि महान्वापि यश्च स्थानच्युतो भवेत् ।
दुःसंस्थितो विवर्णो वा ध्रुवो यस्य च वाजिनः ॥ ६३४ ॥

निन्द्यः प्रदक्षिणोऽप्येष प्रशस्तो दक्षिणेतरः ।
एक एव द्विधाभूतो विच्छिन्न इव दृश्यते ॥ ६३५ ॥

यःस्थानेषु च सर्वेषु ज्ञेयो विच्छिन्न इत्यपि ।
योऽश्वानामपि संस्थाने निन्दितैरितरैरपि ॥ ६३६ ॥

न शक्यते विनिर्देष्टुं तं विमूढं विनिर्दिशेत् ।
यथोद्दिष्टप्रदेशानां मध्यात्किञ्चिदपाश्रितम् ॥ ६३७ ॥

अल्पस्थं शुभसंस्थानं विन्यस्तमिति निर्दिशेत् ।
रोम्णां विकारो व्यत्यस्तो वक्रभूतश्च यो भवेत् ॥ ६३८ ॥

निन्द्यस्थाने प्रशस्ते वा विज्ञेयस्तिर्यगायतः ।
प्रमाणादवकृष्टश्च हीनश्चैवाधिको भवेत ॥ ६३९ ॥

स्थानच्युतं तं विद्याद्यः प्रदेशादन्यथाश्रितः ।
जातेऽश्वे ये न जायन्ते केचित्केषांचिदेव तु ॥ ६४० ॥

जाताश्चापि प्रणश्यन्ति रोमजास्तेऽध्रुवा मताः ।
द्वे स्थाने सृक्कणी तेषां तयोर्द्वौ रोमजौ स्मृतौ ।
ललाटे चैव चत्वारि स्थानानि पृथगेव हि ॥ ६४१ ॥

तेष्वपि द्वादशावर्ता यमौ त्रेताग्नयस्तु यः ।
त्रिभिर्निश्रेणिका नाम चतुर्भिः चतुरश्रकः ॥ ६४२ ॥

स्थानमेकं स्तवे ज्ञेयं स्थाने द्वे कर्णमूलयोः ।
स्थानं निगालमेकं स्यात्स्थाने केशान्तयोरुभे ॥ ६४३ ॥

तयोः शुक्तिद्वयं विद्यात्कण्ठे चैकं प्रकीर्तितम् ।
श्रीवृक्षो वक्षसि प्रोक्तस्त्वावर्तैः पञ्चभिर्भवेत् ॥ ६४४ ॥

तथैव वक्षसि स्थाने चतुर्भिस्त्रिभिरेव च ।
बाह्वोः स्थाने द्वयं प्रोक्तं तत्रावर्तद्वयं भवेत् ॥ ६४५ ॥

द्वे चोपरन्ध्रयोः स्थाने द्वौ स्थितौ तत्र रोमजौ ।
एवं शुभादिस्थानानि तान्युक्तानि च विंशतिः ॥ ६४६ ॥

भवन्ति रोमजास्तेषु त्रिंशत्सप्ताधिकाः पुनः ।
प्रोथो घोणोत्तरोष्ठेषु काकसाकमुदासने ॥ ६४७ ॥

पृष्ठे गले क्रोडहृदोस्त्रिके पायौ च मावने ।
नाभौ तु संविजानीयादेकैकं चात्र रोमजम् ।
नासापुटे चाश्रुपाते भ्रूकर्णान्तकटेषु च ॥ ६४८ ॥

शंखगण्डहनूचक्रे तथैवं बिन्दुमर्मणि ।
स्कन्धमन्यावहौमेषु जानुकक्षोदरेषु च ॥ ६४९ ॥(?)

पार्श्वयोः पुच्छमूले च तथा स्फिक्पिण्डमुष्कयोः ।
मूत्रकोशे स्थुरायां च विद्याद्द्वौ द्वौ च रोमशौ ॥ ६५० ॥

प्रपाणे चैव जंघायां कलायां कूर्चयोस्तथा ।
चतुरश्चतुरो विद्यात्कुष्ठिकायां तथैव च ॥ ६५१ ॥

यथोक्ता रोमजाश्चैते विनिन्द्याः षट् च सप्ततिः ।
शुभाशुभं ध्रुवेषूक्तमथाध्रुवगतं फलम ॥ ६५२ ॥

वक्ष्यते हयशास्त्रज्ञभाषितं मुनिसमतम् ।
आवर्तौ यस्य सृक्कस्थौ शुक्तिर्वा तस्य वाजिनः ॥ ६५३ ॥

पुत्रान्पौत्रांस्तथा मृष्टमन्नं भर्ता समश्नुते ।
करालिदोषो भवति सृक्कावर्ती(र्तः) तुरङ्गमः ॥ ६५४ ॥

गुणदोषविभागज्ञः एवं वदति कश्चन ।
ललाटे यस्य चावर्तौ समौ स्यातां प्रदक्षिणौ ।
संग्रामे तेन जयति पुत्रैः पौत्रैश्च वर्धते ॥ ६५५ ॥

प्रदक्षिणाः प्रधानस्थास्तयोर्यस्य ललाटजाः ।
त्रेताग्निनिभसंस्थाना अनेकाकृतयस्तथा ॥ ६५६ ॥

क्षत्रियस्तादृशं लब्ध्वा शत्रूणां मूर्ध्नि वर्तते ।
यज्ञांश्चैव समाधत्ते विपुलान् भूरिदक्षिणान् ।
त्रेताग्निसदृशावर्तः ककुदावर्तदोषहा ॥ ६५७ ॥

**कश्चिदेवं समाचष्टे वाजिशास्त्रविशारदः ।**
**त्रिभिः प्रदक्षिणावर्तैः निश्रेणिस्स्याल्ललाटजैः ॥ ६५८ ॥**

तया तु निश्श्रेणिकया जयेद्राजा रिपून् रणे ।
नित्यं विजयते चैव चक्रमस्य प्रवर्तते ॥ ६५९ ॥

धनधान्यविवृद्धिं च तेनाश्वेन सदाऽऽप्नुयात् ।
निश्श्रेण्यावर्तयुक्तश्च शृङ्गिदोषं व्यपोहति ॥ ६६० ॥

कश्चिदेवं समाचष्टे वाजिशास्त्रविचक्षणः ।
ललाटे यस्य चावर्ताश्चत्वारः स्युश्चतुर्दिशम् ॥ ६६१ ॥

तेन राजा विजयते निस्सपत्नां वसुन्धराम् ।
रणे च विजयी नित्यं वसुमान्पुत्रपौत्रवान् ॥ ६६२ ॥

आवर्तो मुकुलं वापि स्तवे यस्य प्रदक्षिणम् ।
वाजिनस्तस्य भर्ता यः रणे जयति शात्रवान् ॥ ६६३ ॥

आवर्तौ कर्णमूलस्थौ वृषभाख्यौ प्रकीर्तितौ ।
विजयं लभते ताभ्यामलंकारं च वाजिमान् ॥ ६६४ ॥

त्रिकर्णिदोषं हरति वृषभावर्तवान्हयः ।
एवमाचष्ट कश्चिच्च वाजिशास्त्रविशारदः ॥ ६६५ ॥

आवर्तश्च निगालस्थः सुव्यक्तस्सुप्रदक्षिणः ।
स वै देवमणिर्नाम सर्वकामार्थसाधकः ॥ ६६६ ॥

निहन्ति चाशुभान्सर्वानावर्तान्पूर्वकायजान् ।
तमारुह्य नृपः संख्ये सर्वं जयति शात्रवम् ॥ ६६७ ॥

पूर्वकायगतावर्तदोषं हरति निश्चितम् ।
मुक्त्वा च ककुदावर्तदोषमित्याह चापरः ॥ ६६८ ॥

केशान्ते[न्ते]यस्य शुक्ति[क्तौ द्वे]र्द्वे ऊर्ध्वे प्राचीनमायते ।
क्षत्रियस्तेन जयति पुत्रैः पौत्रैश्च वर्धते ।
कण्ठे ह्यूर्ध्वायता शुक्तिरावर्तो वापि यो भवेत् ॥ ६६९ ॥

स रोचमानो विज्ञेयो भर्तुर्मित्रविवर्धनः ।
यस्यावर्ताश्च दृश्यन्ते वक्षस्थाः सुस्थितास्त्रयः ॥ ६७० ॥

प्रदक्षिणाऽव्यक्तरूपाः शुक्तयश्चोर्ध्वरोमजाः ।
भर्ता तस्य रणे शत्रून् जित्वा स्वस्थो निवर्तते ॥ ६७१ ॥

वक्षस्था यस्य चावर्ताश्चत्वारः स्युश्चतुर्दश[दिशम् ] ।
सुस्थिताऽव्यक्तरोमाणः शुक्तयो ह्यर्धरोमजाः ॥ ६७२ ॥

स शत्रुघ्नश्च समरे सर्वकामार्थदो हयः ।
उरस्था यस्य चावर्ताश्चत्वारः स्युः प्रदक्षिणाः ॥ ६७३ ॥

रोचमानस्तु कण्ठस्थः श्रीवृक्ष इति तं विदुः ।
एष श्रीवृक्षको नाम्ना सर्वकामार्थसाधकः ॥ ६७४ ॥

संग्रामे तेन जयति पुत्रपौत्रैश्च वर्धते ।
बाहुजौ यस्य चावर्तौ शुक्तिः[क्ती]स्यातां हयस्य च ॥ ६७५ ॥

सोऽङ्गदी नाम तुरगो भर्तुराभरणप्रदः ।
रन्ध्रयोरुपरिष्टाच्च यस्यावर्तौ प्रदक्षिणौ ।
स मेखली वर्धयति कोष्ठागारं वसून च ॥ ६७६ ॥

कलत्रैश्च सुखी स स्यात्पुत्रैः पौत्रैश्च वर्धते ।
श्रीवक्षः स्वस्तिकः पद्मं वर्धमानं गदा ध्वजः ॥ ६७७ ॥

नन्दावर्तो हलं चक्रं शंखो वज्रमसिर्धनुः ।
मत्स्यश्चन्द्राऽर्धचन्द्रो वा पताका मुसलं तथा ॥ ६७८ ॥

एवमाद्याश्शुभावर्ता दृश्यन्ते यस्य वाजिनः ।
वक्षसि स्युर्ललाटे च स राज्ञां राज्यमावहेत् ॥ ६७९ ॥

इत्यावर्ताः प्रशस्ताः स्युरशुभेष्वथ वक्ष्यते ।
अशुभेष्वेव निन्द्यानामावर्तानामलंक्रमात्(?) ॥ ६८० ॥

प्रोथावर्ताः प्रोथयन्ति भर्तारं सकुलं तथा ।
प्रोथाक्ष्णोरन्तरे यश्च घोणायां रोमजो भवेत् ॥ ६८१ ॥

समरे शत्रुभिर्भर्ता बाध्यते तस्य वाजिनः ।
आवर्तस्तूत्तरोष्ठे स्यात्स्वामिनो मातृघातकः ॥ ६८२ ॥

काकमावर्तिनोऽश्वस्य वायसैर्भक्ष्यत पतिः ।
यस्यावर्तश्च ककुदे ककुदी स च कीर्तितः ।
भर्तारं सान्वयं हन्याद्वे वा भर्तुं कुलोत्तमाः ॥ ६८३ ॥

वाहनानां विनाशाय राज्ञो राष्ट्रवधाय च ।
सर्वार्थनाशनं रौद्रं जातमात्रं विवासयेत् ॥ ६८४ ॥

न च शालासु बध्नीयाद्धयं वैद्यविगर्हितम् ।
अवनीर्य च संग्रामं न स जीवन्निवर्तते ॥ ६८५ ॥

हस्तस्पर्शेन चक्षुर्भ्यां दूरतः परिवर्जयेत ।
द्विजेभ्योऽसौ पदातव्यः परराष्ट्रेषु वोत्सृजेत् ॥ ६८६ ॥

दृष्ट्वा सूर्यं निरीक्षेत स्पृष्ट्वा स्नायात्सवासमा ।
एष ह्यावर्तरूपेण धूमकेतुरिवोत्थितः ।
आसनावर्त[र्ति]नो भर्ता शूलेन वधमर्हति ॥ ६८७ ॥

पृष्ठजावर्त[र्ति]नो भर्ता रणमध्येन वाजिनः ।
अर्थदूषणदोषान्तः क्षिप्रं शस्त्रेण ब[व]ध्यते(?) ॥ ६८८ ॥

यस्यावर्तश्च दृश्येत गलमध्ये प्रतिष्ठितः ।
स्वामी तस्याथ नेता चा[चाप्य]न्नपानस्य भाजनम् ॥ ६८९ ॥

यस्यावर्तश्च दृश्येत क्रोडमध्ये प्रतिष्ठितः ।
रणे परिकरैस्सार्धं प्रभुं सोऽश्वस्तु घातयेत् ॥ ६९० ॥

हृदयावर्त[र्ति]नोऽश्वस्य भर्ता शोकपरिप्लुतः ।
वधबन्धपरिक्लिष्टः सान्वयश्च विनश्यति ॥ ६९१ ॥

त्रिकावर्तस्तुरङ्गस्य नैव धन्यः प्रकीर्तितः ।
तथैव गुदजावर्तं नवदन्ति मनीषिणः ॥ ६९२ ॥

आवर्तो यस्य मावन्यां कुक्षिव्याधिकरश्च सः ।
नाभ्यामावर्तरूपं च यस्य स्यात्तुरगस्य तु ॥ ६९३ ॥

भर्ता तस्य ससन्तानो व्याधिभिः पीड्यते भृशम् ।
नासापुटस्थावावर्तौ भर्तुर्वित्तविनाशनौ ॥ ६९४ ॥

आवर्तावश्रुपातस्थौ दृश्येते यस्य वाजिनः ।
नित्याश्रुपाति तद्विद्यात्कुलं यस्येदृशो हयः ॥ ६९५ ॥

दृश्येते यस्य चावर्तौ भ्रुवोर्मध्यगतावुभौ ।
स हयो भ्रुकुटिर्नाम ज्ञातिमित्रविरोधकृत् ॥ ६९६ ॥

कर्णमध्याश्रितौ यस्य दृश्येते रोमजावुभौ ।
मन्त्रविश्रावणकृतैः दोषे भर्ताऽस्य वर्धते ।
कटयोर्यस्य चावर्तौ दृश्येते व्यक्तरूपिणौ ॥ ६९७ ॥

भर्तुः कुलं घातयति यावद्गोत्रपरिग्रहम् ।
शंखयोरुभयोर्यस्य दृश्य[श्ये]ते रोमजावुभौ ॥ ६९८ ॥

कुलं स भक्षयेत्सर्वं भर्तुर्व्यसनदो हयः ।
यस्यावर्तौ च दृश्येते गण्डयोरुभयोः स्थितौ ॥ ६९९ ॥

स्वामिनं ज्येष्ठपुत्रं वा स खादति तुरङ्गमः ।
यस्यावर्तौ हनूचक्रे भर्तुस्तस्य शरैर्वधः ॥ ७०० ॥

आवर्तौ विदुमर्मस्थौ दृश्येते यस्य वाजिनः ।
नार्थसिद्धिकरौ भर्तुः ममा[र्मा]वर्ततुरङ्गमः ॥ ७०१ ॥

यस्यावर्तौ च स्कन्धस्थौ मन्यस्थौ वा हयस्य च ।
संग्रामे तस्य भर्तुश्च शरघातो भवेद् ध्रुवम् ॥ ७०२ ॥

यस्यावर्तौ वहस्थौ तु स हयो घातयेद् ध्रुवम् ।
स्वामिनं योक्तृपुत्रौ तु न च कर्मसु सिध्यति ॥ ७०३ ॥

ओमावर्तस्तु यो वाजी सोऽप्रशस्तः प्रकीर्तितः ।
जान्वावर्तस्खलन्संख्ये द्विषत्सैन्यसमाकुले ।
राजचौराग्निदण्डैश्च कुलं भर्तुर्विनाशयेत् ॥ ७०४ ॥

स पातयति भोगाच्च स्थानाच्च वसुधाधिपम् ।
कक्षावर्तस्तु भर्तारं हन्यात्परिकरैः सह ॥ ७०५ ॥

यस्यावर्तो भवेत्कुक्षौ स कुक्षौ व्याधिमान्हयः ।
पार्श्वावर्तस्तुरङ्गस्स्यादप्रशस्तः प्रकीर्तितः ॥ ७०६ ॥

पुच्छमूलस्थितावर्तौ प्रशस्तौ नैव कीर्तितौ ।
स्फिक्पिण्डयोरुपरिजौ यस्यावर्तौ च वाजिनः ॥ ७०७ ॥

सलैण्डपाति(?) विज्ञेयो भर्तृघ्नः कुलनाशनः ।
मुष्कावर्तितुरङ्गस्तु पुत्रमिष्टं विनाशयेत् ॥ ७०८ ॥

आवर्तौ पु[मू]त्रकोशस्थौ दृश्येते यस्य वाजिनः ।
कुलघाती भवत्येष नित्यं युधि शरप्रियः ॥ ७०९ ॥

स्थूरावर्तो च यो वाजी नित्यमध्वनि खिद्यते ।
शस्त्रवध्यश्च भवति सह भर्त्रा तुरङ्गमः ॥ ७१० ॥

स्वामिनः पितरं हन्यात्प्रमाणोपरि दक्षिणे ।
वामे भ्रातृवधं विद्याद्भर्तुरप्युपरिस्थिते ।
जंघासु यस्य दृश्यन्ते तुरगस्य च रोमजाः ॥ ७११ ॥

निगलैर्बध्यते तस्य भर्ता च सह बान्धवैः ।
जलावर्तस्तुरङ्गस्य कूर्चावर्तश्च यस्य च ॥ ७१२ ॥

संग्रामे तस्य भर्तुश्च शरपातो भवेद्ध्रुवम् ।
कुक्षिकावर्तिनोऽश्वस्य भर्ता बध्येच[त] संयुगे ॥ ७१३ ॥

[शु]युभे स्थाने शुभावर्तो दद्यात्सुविपुलं फलम् ।
अशुभश्चाशुभे स्थाने शुभश्चाप्यशुभे यदि ॥ ७१४ ॥

शुभाशुभं तत्र फलमल्पमेव विनिर्दिशेत् ।
शुभाशुभव्यतिकरे बहुत्वेनातिनिर्दिशेत् ॥ ७१५ ॥

समेन मध्यमं ज्ञेयं फलमावर्तिकाश्रयम् ।
वामपार्श्वे तथा वामा दक्षिणे दक्षिणाश्च ये ॥ ७१६ ॥

नानूना न महान्तश्च सवर्णास्निग्धसुप्रभाः ।
स्थानेषु संस्थिता स्वेषु सर्वकामार्थसाधकाः ॥ ७१७ ॥

हीनास्तच्छिन्नमध्यस्थाः तिर्यग्गूढव्यवस्थिताः ।
पृथक् स्वस्थानविभ्रष्टाः विवर्णाः पापलक्षणाः ।
सुवर्णेनाग्निवर्णेन दुष्टमावर्तकं दहेत् ॥ ७१८ ॥

वृषणस्य उभे पार्श्वे लम्बमानशि(सि)रा यदि।
युद्धे स्वामिविनाशं च कुर्यादूर्ध्वश्च संयुगे(?) ॥ ७१९ ॥

यदा दक्षिणपार्श्वे तु शि(सि)रायुग्मेऽर्थगा भवेत्।
भर्तुः शूरकरा ज्ञेया पुत्रपौत्रप्रवर्धनी ॥ ७२० ॥

सर्वदोषविनाशं तु कार्णिहारीतकः सदा।
कोशं बलं च मानं च शि(सि)रायुग्मे तु काङ्क्षितम्(?) ॥ ७२१ ॥

द्विजान्संपूज्य हुत्वा च दोषभाग् न भवेन्नृपः।
एवं च भाषते कश्चिद्वाजिशास्त्रविचक्षणः ॥ ७२२ ॥

अथोच्यन्ते तुरङ्गाणां वर्णनामविधा स्फुटम्।
शुभाशुभफलैर्युक्ताः शास्त्रज्ञैः परिभाषिताः ॥ ७२३ ॥

शुद्धोऽनुवर्णो भेदश्च चित्रं शारश्च कथ्यते।
संक्षेपात्पञ्चवर्णाः स्युरेषां भेदास्त्वनेकधा ॥ ७२४ ॥

यु[शु]द्धं वर्णं केचिदाहुरेकं केचिदुभे तथा।
त्रीन्केचिच्चतुरः केचित्पञ्च केचिद्ब्रुवं स्तथा [ब्रुवन्त्यथ]।
षडेके प्राहुरन्ये च सप्तोचुः शुद्धवर्णकान् ॥ ७२५ ॥

श्वेतमेकं सुमित्रस्तु निमषश्च सितासितौ।
त्रीनेव मित्रजित्प्राह श्वेता रक्तास्सितास्तथा ॥ ७२६ ॥

चत्वारश्शुद्धवर्णाश्च शालिगो[हो]त्रमते स्थिताः।
श्वेतो रक्तो हरिद्राभश्चतुर्थो मेचकः स्मृतः ॥ ७२७ ॥

अस्त्यलिः पञ्चपा(पी)ताढ्यान् हरिरक्तसितासितान्।
पञ्चैतानेव कर्कं च कारिको विप्रभावयेत् (?)॥ ७२८ ॥

षडेते शुकवर्णाभाः सप्त गर्गेण भाषिताः।
यस्यैकवर्णं भवति रोमत्वग् बालकेसरम् ॥ ७२९ ॥

स शुद्धवर्णो विज्ञेय इति तस्य हि लक्षणम्।
कर्णौ नैतादृशस्तस्य त्वचि वर्णान्यता स्मृतेः(?) ॥ ७३० ॥

तस्मात्तस्यानुवर्णादौ प्रवेशश्च करिष्यते ।
पीतोऽपि हरिवर्णस्य भेदस्तत्र प्रवक्ष्यते ॥ ७३१ ॥

शुक्लवर्णोऽपि कृष्णस्य मध्य एव प्रवेक्ष्यते ।
तस्माद्वा शालिहोत्रोक्ता चतुर्णो शुद्धवर्णता ।
उपपत्तिमती सैवेत्यस्माभिरुपपाद्यते ॥ ७३२ ॥

श्वेतत्वक् श्वेतरोमा यः श्वेतकेसरवालधिः ।
श्वेत इत्येव विज्ञेयः सोऽश्वः सर्वार्थदो मतः ॥ ७३३ ॥

शुक्लाभं तुरगं बिभ्र[भ्रत् ]कुरुतेऽरीन् वशे युधि ।
शङ्खश्वेतो भवेद्वाजी शङ्खघोषसमस्वनः ॥ ७३४ ॥

सलीलं हंसवद्गच्छेन्नात्यर्थविनतोन्नतः ।
तेन राष्ट्रं च कोशश्च कोष्ठागारं च वर्धते ॥ ७३५ ॥

मित्राणि चानुरज्यन्ते शत्रूश्चैवाधितिष्ठति ।
यजते चाश्वमेधेन पृथिवीं चानुशासति ॥ ७३६ ॥*

सुवर्णयूथिकाभं वा [पीतं] स्निग्धतनूरुहम् ।
मनोहरं विभक्तांगं मानोन्मानसमाहितम् ॥ ७३७ ॥

सिंहनादे विगमनं वश्यं वश्येन्द्रियं शुचिः ।
उदग्रौजस्विनं शूरं मेघशङ्ख(सम)स्वनम् ॥ ७३८ ॥

क्षत्रियं कुलजं दान्तं सत्ववन्तं जवान्वितम् ।
अरोगं सारवन्तं च वयस्थं शुभरोमजम् ॥ ७३९ ॥

मेधाविनं प्रभायुक्तं चन्दनागरुगन्धिनम् ।
समसंपूर्णदन्ताक्षं शुद्धपुण्ड्रं ललामिनम् ॥ ७४० ॥

प्रशस्तलक्षणं शान्तं सर्वकर्मसु पूजितम् ।
सान्नाह्यं वाजिनं कुर्यात् जुष्टं परमया श्रिया ॥ ७४१ ॥

---

* अत्र चतुर्विंशतिपत्राणि अलिखितानि दृश्यन्ते इति मातृकायां लिखितम् ॥ This has been transcribed from a Ms. of Harihararajaguru, Chochinajagannathapuram, Kudala Post, Ganjam Dt, during 1921-'22.

शालिपिष्टसवर्णानि लाक्षारसनिभानि च ।
भ्राजन्ते यस्य गात्राणि रक्तवर्णे च[न] चक्षुषा ॥ ७४२ ॥

सुगन्धिनो यस्य गन्धा घ्रायन्ते सुमनोरमाः ।
साम्नाहिकं तम[प्यश्वं]पश्यं जानीयाद्वाजिशास्त्रवित् ॥ ७४३ ॥

यस्तु श्वेनेक्षणः श्वेतः पद्मगन्धसमन्वितः ।
तेजस्वी मृदुवालश्च नादवान्सुप्रतिष्ठितः ॥ ७४४ ॥

ताम्रच्छविस्ताम्रखुरस्ताम्रास्यस्ताम्रतालुकः ।
साम्नाहिकं तमप्यश्वं जानीयाद्वाजिशास्त्रवित् ॥ ७४५ ॥

यस्तु शङ्खनिभः श्वेतः मुक्ताभस्सुच्छविस्तथा ।
संपूर्णसमसर्वाङ्गो हयः कलभनिस्वनः ।
आवर्ता यस्य चत्वारो ललाटे सुप्रदक्षिणाः ॥ ७४६ ॥

साम्नाहिकं तमप्यश्वं जानीयाद्वाजिशास्त्रवित् ।
सुमनः पुष्पवर्णस्य यस्य श्वेतस्य वाजिनः ॥ ७४७ ॥

अक्षिणी च प्रकाशेते मणिवर्णनिभे शुभे ।
महास्वनो ललाटश्च दीर्घपुण्ड्रशुभद्युतिः ॥ ७४८ ॥

साम्नाहिकं तमप्यश्वं जानीयाद्वाजिशास्त्रवित् ।
एते प्रशस्ताः कथिताः साम्नाह्यास्तुरगाः शुभाः ॥ ७४९ ॥

असान्नाह्यानिमानश्वान् वदामो मुनिसंमतान् ।
यस्य स्वन हनूचक्के कर्णौ च परिमण्डलौ । ७५० ॥

आक्षकूटे रविस्पष्टे अक्षिणी चाप्यधोमुखे ।
यस्यैतल्लक्षणं लक्ष्यं तं विद्यात्पापलक्षणम् ॥ ७५१ ॥

यस्तेन याति संग्रामे न स जीवन्निवर्तते ।
पृष्ठे निहतभर्ता च बहुशस्त्र[ह]तो रणे ॥ ७५२ ॥

यमजं चाप्यमङ्गल्यं तुरगं परिवर्जयेत् ।
दुर्मेधसो जडा मूढा बधिरा भीरवस्तथा ।
जवबुद्धिविहीनाश्च निन्दिता वाजिनो मताः ॥ ७५३ ॥

कुब्जा हीनाधिकाङ्गाश्च वामनाश्चातिविस्मृ[स्तृ]ताः ।
विकृतास्तेऽप्यमङ्गल्या न्यूनाधिकशरीरिणः ॥ ७५४ ॥

वालहीनाश्च हीनाश्च काणाः कुब्जास्तथैव च ।
मानानर्हाश्च विज्ञेयाः पिशुना निन्दिता हयाः ॥ ७५५ ॥

न क्रेया नापि विक्रेया द्वयोरप्यर्थनाशकाः ।
विक्रीतानामपो[पि]ह्येषां व्यवहारेण वाजिनाम् ॥ ७५६ ॥

भवेच्च द्विगुणो दोषस्तस्मात्तान्परिवर्जयेत् ।
यद्यप्यन्यैर्गुणैस्ते तु दृश्यन्ते सहितैर्हयाः ॥ ७५७ ॥

नैव तान् स्थापयेद्धीरो मुहूर्तमपि वेश्मनि ।
अनर्थैर्योजयेद्यस्तु संस्पर्शादपि वाजिनः ॥ ७५८ ॥

ये चापि तेषामङ्गेषु भवेयुः पुष्कला गुणाः ।
महादोषैर्महादोषतमैरभिभवन्तु ते ॥ ७५९ ॥

राहुग्रह[स्त]स्य शशिनः सकला इव सद्गुणाः ।
निष्फला इव सर्वे स्युर्न ग्राह्यास्ते कथञ्चन ।
कादाचित्कानिष्टफला दोषत्वेन प्रकीर्तिताः ॥ ७६० ॥

सर्वकालानिष्टफला महादोषास्तथा स्मृताः ।
भृशं प्राणहरा ये च महादोषतमाः स्मृताः ॥ ७६१ ॥

एतत्त्रयं च बोद्धव्यं गजानां लक्षणेष्वपि ।
अश्वानां परमायुः स्यात् द्वात्रिंशत्संख्यवत्सरम् ॥ ७६२ ॥

मासावधि वयोज्ञानं साधनं तत्र कथ्यते ।
उत्तराश्चाधराश्चैव दन्ता द्वादश चाग्रतः ॥ ७६३ ॥

ते संदंशा इति प्रोक्ता वाजिशास्त्रविशारदैः ।
ह्यानव्याश्च चतुर्विंशा भक्षार्थदशनाः स्मृताः ॥ ७६४ ॥

पारिभक्षाश्च ते प्रोक्ता जाता हनुसमीपतः ।
संदंशानां तथा(पा)रिभक्षाणां मध्यदेशतः ॥ ७६५ ॥

दंष्ट्राश्चतस्रो विज्ञेया मध्यमाश्चाधरोत्तराः ।
दन्तसंग्रह इत्येष चत्वारिंशत्क इष्यते ॥ ७६६ ॥

तत्रायुर्व्यज्यतेऽश्वानां यथा रूपाणि दर्पणे ।
मासमात्रं हयं विद्यात्संदंशैः किञ्चिदुद्गतैः ।
द्विमासतुरगो ज्ञेयो व्यक्तसंदंशवांश्च यः ॥ ७६७ ॥

त्रिमासश्च हयो ज्ञेयः किञ्चिज्जातैश्च मध्यमैः ।
सुव्यक्तैर्मध्यमैर्दन्तैः स्याच्चतुर्मासजशिशुः ॥ ७६८ ॥

किञ्चिज्जाताः पारिमक्षाः परिपूर्णाश्च मध्यमाः ।
यस्य शावस्य तं विद्याज्जन्मतः पञ्चमासकम् ॥ ७६९ ॥

लक्ष्मलक्ष्यासु सूक्ष्माच्च राजधूम्रारुणा यदा ।
सन्दंशान्प्रतिपद्येत तदा षण्मासजः शिशुः ॥ ७७० ॥

संदंश एकः शुक्लःस्यान्मध्यमेषु च दृश्यते ।
यदा लेखारुणानिभा स्थिरगात्रा खुरास्तथा ॥ ७७१ ॥

तदा हयशिशुर्ज्ञेयो जन्मतस्सप्तमासिकः ।
सुव्यक्तैः पारिमक्षैश्च संपूर्णैरपि मध्यमैः ॥ ७७२ ॥

संदंशाभ्यां सुशुक्लाभ्यामुत्तराभ्यां शिशुर्यदा ।
तदा हयशिशुर्ज्ञेयो जन्मतश्चाष्टमासजः ॥ ७७३ ॥

मध्यमासु च संपूर्णा राजचैव प्रदृश्यने(?) ।
विषमत्वं च केशानां तदा स्यान्नवमासिकः ।
सुशुक्ला मध्यमा दन्ता रोम चास्य विशीर्यते ॥ ७७४ ॥

यस्य तं कुशये विद्याज्जन्मतो दशमासिकम्(?) ।
मध्यमाश्चाधराः शुक्लाः स्थिरकेसरवालधिः(?) ॥ ७७५ ॥

पारिमक्षाश्च संपूर्णा मुष्कं कालं च लक्ष्यते ।
एवमेतद्विजानीयाच्छावं मासोनवर्षकम् ॥ ७७६ ॥

सर्वेषामेव दन्तानां श्वेतत्वमुपलक्ष्यते ।
भूषितश्च भवेच्छावो मृदुदीर्घैस्तनूरुहैः ॥ ७७७ ॥

आगमस्यैकमुष्कस्य स्यादेकसम एव च ।
मृदुभिस्तनुभिः स्निग्धैः भूषितश्च तनूरुहैः ॥ ७७८ ॥

प्राहुर्द्विसंवत्सरकं कषायदशनं शिशुम् ।
पत(ति)तोद्य(त्थि)तसं[दं]शा ज्ञेयास्ते त्रिदशा हयाः ॥ ७७९ ॥

द्वितीयेऽथ तृतीये वा मुष्कौ स्यातां हयस्य च ।
तेजस्वी बलवान् हृष्टः स्निग्धवर्णतनूरुहः ॥ ७८० ॥

चतुस्समो हयस्स्याच्च मध्यमैः पतितोत्थितैः ।
बलसारेन्द्रियगुणैर्युक्तस्तेजोजवान्वितः ।
संपूर्णैः शुभभक्तैश्च पारिभक्षैः सुसंहतैः ॥ ७८१ ॥

अङ्गैर्विभक्तैर्वलितैर्बलवान्मुदितेन्द्रियः ।
काशकुन्देन्दुसदृशैः तथा शुक्तिनिभैर्द्विजैः ॥ ७८२ ॥

गम्भीरः पतितोद्भूतैस्तुरगः पञ्चहायनः ।
बाल्याद्विमुक्तो भवति परां वृद्धिमवाप्नुयात् ॥ ७८३ ॥

मृदुत्वग् रोमबालश्च प्रसन्नो मुदितेन्द्रियः ।
सर्वत्रायतवृत्तिश्च प्रत्युपस्थितयौवनः ॥ ७८४ ॥

तदा प्राहुर्भवेच्छुक्लं स्वरश्च परिवर्तते ।
यदा पुमान् षोडशकः पञ्चवर्षस्तथा हयः ॥ ७८५ ॥

तदा भवति तेजस्वी सर्वकर्मक्रियासहः ।
पञ्चहायनपर्यन्तं वयसो ज्ञानसाधनम् ॥ ७८६ ॥

व्यञ्जनं प्रोक्तमस्माभिरथ षष्ठादिषूच्यते ।
कालिकाहरणी चैव शुक्ला काचाऽथ माक्षिका ॥ ७८७ ॥

शंखो मूकलकं चैव दन्तानां चलनं तथा ।
ततस्तु पतनं विद्याद्वेषव्यञ्जनसंग्रहः ।
राजितिर्यक् स्थिता दन्ते काचिज्जाम्बवसप्रभा ॥ ७८८ ॥

अरिष्टवर्णनिर्वापितलोहभेदनिभाऽपि वा ।
कालिकेति च विज्ञेया वाजिशास्त्रविशारदैः ॥ ७८९ ॥

षष्ठे संदंशदन्तेषु सप्तमे मध्यमेषु च ।
अष्टमे पारिभक्षेषु स्थितां तामुपलक्षयेत् ॥ ७९० ॥

प्रहृष्टो बलवान् दृप्तो मांसे[नो]कोपचितः स्थिरः ।
स्निग्धकेसरवालश्च सुप्रसन्नतनूरुहः ॥ ७९१ ॥

अदीनगतिहेषी च प्रियदर्शीबलान्वितः ।
अन्यतश्च जवोत्साहैः परं यौवनमास्थितः ॥ ७९२ ॥

षष्ठसप्ताष्टमाद्वर्षान्नित्यमेव तुरङ्गमः ।
गोमेधकसवर्णा वा किञ्चिच्च कपिलाऽपि वा ॥ ७९३ ॥

पद्मकिञ्जल्कसदृशा सुवर्णमधुसन्निभा ।
पिपीलिकानिभा मध्ये काण्डत्वक् सदृशी च या ॥ ७९४ ॥

झषस्फुरितपीताभा दीर्घदन्ततलाश्रिता ।
संदंशादिषु विज्ञेया हरिणी नवमादिषु ।
नवमे त्वथ संदंशैर्मध्यमैर्दशमे तथा ॥ ७९५ ॥

एकादशे पारिभक्ष्यैर्हिरण्यविदुरागमम् ।
आकीर्णमांससर्वाङ्गो बलसारसमन्वितः ॥ ७९६ ॥

जवेन हन्यते यश्च न भारेऽध्वपरिश्रमे ।
सुरूपजववर्णश्च यावदेकादशादिति ॥ ७९७ ॥

शालितण्डुलसंकाशा मुक्तावर्णाथवा पुनः ।
तलमध्ये समावृत्ता रेखा क्षारप्रभाऽथवा ॥ ७९८ ॥

शुक्ला ज्ञेया द्वादशादि यावद्वर्षाश्चतुर्दश ।
शिथिलच्छविमांसश्च रूपाच्च परिहीयते ॥ ७९९ ॥

शुक्ला व्यञ्जनिनस्त्वेतद्वाह्यं भवति लक्षणम् ।
सितसर्षपवत्केचिदच्छिद्राश्छिद्रसंस्थिताः ॥ ८०० ॥

समानवर्णाः केचित्स्युः तथा कोद्रवतण्डुलैः ।
कृष्णकाचोपमाः[पमाः] केचिद्वृत्ता निम्नाश्च बिन्दवः ॥ ८०१ ॥

एको द्वौ वा त्रयो वाथ दन्ते काचा न संशयः ।
बालभिष्वेव जायन्ते वलयः पलितैस्सह ॥ ८०२ ॥

काचा पञ्चदशाब्दात्तु यावत्सप्तदशाब्दकम् ।
सा पीतकृष्णरक्ताभा माक्षिका मक्षिकाकृतिः ।
अष्टादशादिषु ज्ञेयो यावद्विंशतमो हयः ॥ ८०३ ॥

भूयश्चैवाभिवर्धन्ते वलयः पलितानि च ।
चिबुकश्चाधरोष्ठश्च श्रवणौ च प्रलम्बते ॥ ८०४ ॥

इत्येतैर्व्यञ्जनैर्विद्याद्वाजिनं विंशहायनम् ।
शंखस्तु शंखवर्णाभो भिन्नशंखदलोपमः ॥ ८०५ ॥

मण्डलो वार्धचन्द्रो वा तिर्यग्दन्ततलाश्रितः ।
एकविंशतमाद्वर्षात्त्रयोविंशसमस्य च ॥ ८०६ ॥

वलीपलितपूर्णाङ्गः स्रस्तश्रवणमेहनः ।
एतद्वदन्ति विज्ञानं त्रयोविंशसमस्य च ॥ ८०७ ॥

हरिणीपदसंस्थानं तथैवोडुकलाकृतिः ।
अच्छिद्रं छिद्रसंकाशं यत्तज्ज्ञेयमभू[मुलू]खलम् ॥ ८०८ ॥

संदंशादिषु विज्ञेयं चतुर्विंशादिवाजिनाम् ।
भवन्ति तस्य गात्राणि विकृतान्यपि पर्वसु ॥ ८०९ ॥

स्वप्नशीलश्च भवति मन्दग्रासस्तथैव च ।
एवं षड्विंशकं चैव लक्षयेद्धयकोविदः ।
सप्तविंशे च संदंशा अष्टाविंशे च मध्यमाः ॥ ८१० ॥

एकोनत्रिंशदब्दे तु पारिभक्षाश्चलन्ति तु ।
त्रिंशद्वर्षे तु संदंशा एकत्रिंशे च मध्यमाः ॥ ८११ ॥

पतन्ति पारिभक्षाश्च द्वात्रिंशे तु न संशयः ।
आयुर्द्वात्रिंशदश्वस्य दशा तस्य त्रिवार्षिकी ॥ ८१२ ॥

द्विसप्ततिश्च दिवसाः क्षेत्रमेवं विभावयेत् ।
क्षरत्यायुर्विभागेन क्षेत्रमित्यभिधीयते ॥ ८१३ ॥

आद्यं क्षेत्रं प्रपानादि आललाटाद्विनिर्दिशेत् ।
ललाटोपरि मूर्ध्नि स्यात् द्वितीयं मस्तकाश्रितम् ॥ ८१४ ॥

क्षेत्रं तृतीयं विज्ञेयं ग्रीवातः स्कन्धदेशजम् ।
जातुकर्मांसकूटस्तु उरः काकुदकाकसाः ॥ ८१५ ॥

ओमांसफलकं चैव चतुर्थं क्षेत्रमिष्यते ।
पूर्वगात्रविभागेन क्षेत्रं क्रोडादिपञ्चमम् ॥ ८१६ ॥

हृत्कक्षकुक्षिपार्श्वे च पृष्ठासनकुकुन्दरे ।
षष्ठं क्षेत्रं तुरङ्गाणां पृष्ठवंशोदरेषु च ॥ ८१७ ॥

नाभ्यां सप्तममिच्छन्ति प्रदेशा ये च गुह्यकाः ।
रन्ध्रोपरन्ध्रौ कुक्षी च पुच्छजा ये च जाघनाः ।
प्रदेशास्त्वष्टमं क्षेत्रमूरुभ्यां सह कीर्तितम् ॥ ८१८ ॥

जांगलो जानुजंघे च स्फिग् विपाण्डु च रोहिणी ।
वक्रशुक्तियुते स्थूरे नवमं क्षेत्रमिष्यते ॥ ८१९ ॥

स्थूरा जान्वोरधस्ताच्च यःशेषं दशमं तु तत् ।
एवं स्थानविभागेन प्रपानादीनि वाजिनाम् ॥ ८२० ॥

क्षेत्राणि बुद्ध्या क्षेत्रेषु प्राप्ताः प्राप्तफलं विदुः ।
आयुषः प्रविभागेन वयस्तः क्षेत्रतस्तथा ॥ ८२१ ॥

लक्षणानां फलं विद्यात्तत्कालान्तरितं फलम् ।
यथा ग्रहाः प्रयच्छन्ति शुभाशुभफलं ध्रुवम् ॥ ८२२ ॥

स्वकीयायां दशायां तु स्वक्षेत्रेषु तथा हयाः ।
एवं गजेऽपि मन्तव्यं शास्त्रज्ञैश्च दशाफलम् ॥ ८२३ ॥

सर्वाङ्गव्यापिनं विद्यात्सर्वकालफलोदयम् ।
हयं पूर्णायुषं विद्यात्सर्वैः क्षेत्रैःसुलक्षणैः ॥ ८२४ ॥

प्रथमादिदशान्तेषु यत्रैष्वेकैककेष्विह ।
दुर्लक्षणेषु विद्याच्च दशैकैकप्रणाशनम् ।
द्यादिक्षेत्रविनाशेषु दशाब्दादिविनाशनम् ॥ ८२५ ॥

सर्वक्षेत्रविनाशे च सर्वमायुः प्रणश्यति ।
महाघोणा महानासा ये चाश्वाः पृथुवक्षसः ॥ ८२६ ॥

तेषां दीर्घं भवेदायुः स्निग्धाङ्गा ये च सर्वदा ।
सुसंहताश्च ये वाहा ह्रस्वकर्णास्तथैव च ॥ ८२७ ॥

खरनेत्रप्रभावेषु नहीनाश्चिरजीविनः ।
कर्णाग्रपीडने येषां सिन्दूराभस्य दर्शनम् ॥ ८२८ ॥

शोणितस्य भवेत्क्षिप्रं ते मताश्चिरजीविनः ।
पद्माङ्कुरसमाकाराः खड्गशंखेन्दुसन्निभाः ॥ ८२९ ॥

शुक्तिचक्रगदाकाराः प्रोथरेखाश्चिरायुषाम् ।
स्निग्धगम्भीरदीर्घाश्च प्रोथजा यस्य वाजिनः ।
भवन्ति विपुला रेखाश्चिरजीवी भवेत्तु सः ॥ ८३० ॥

उदक्प्रोथाश्रिता रेखा यस्य दीर्घा प्रदृश्यते ।
ह्रस्वा वा यस्य वाहस्य न चित्रं तस्य जीवितम् ॥ ८३१ ॥

निविष्करन्ति ये घासं सुग्रीवा ह्रस्वमेहनाः ।
तुरङ्गमाश्च विज्ञेयाः प्रशस्ताश्चिरजीविनः ॥ ८३२ ॥

निगूढवृषणा धन्याः सर्वदा सर्वकामदाः ।
येऽवजिघ्रन्ति घासांश्च तेऽपि दीर्घायुषो हयाः ॥ ८३३ ॥

विनतः पूर्वकायेन स्थूलजानुश्च यो हयः ।
स्थूलाक्षिकूटस्तब्धाक्षः स्वल्पायुः परिकीर्तितः ॥ ८३४ ॥

तिरश्ची चोर्ध्वगा चैव द्वे रेखे भवतो ध्रुवम् ।
प्रोथमध्ये तु वाहस्य चतुर्दशसमश्च सः ॥ ८३५ ॥

ऊर्ध्वं प्रोथसमा रेखा दृश्यते यस्य वाजिनः ।
तस्य मृत्युस्समादिष्टो दशमं प्राप्य वत्सरम् ॥ ८३६ ॥

दक्षिणेन च पार्श्वेन शेरते ये च सर्वदा ।
बहुमूत्राः स्वल्पमूत्राश्चिरं जीवन्ति ये हयाः ।
तुरङ्गमाणां संप्रोक्तं यच्छुभाशुभलक्षणम् ।
अश्वास्वपि च तद्योज्यमविरुद्धं च यद्भवेत् ॥ ८३७ ॥

इति श्रीमन्महाराजाधिराजगजपतिप्रतापरुद्रदेवस्वहस्तधारितकनककेसरिचतुष्टयावेष्टित-
शातकुम्भमयकुम्भसंभृतमेघाडंबराभिधानसितातपत्रशोभमानकविपुङ्गव-
पण्डितराजराजगुरुवाजपेययाजिमन्त्रिवरगोदावरमिश्रविरचिते
हरिहरचतुरङ्गे तृतीयोऽश्वपरिच्छेदः ॥

## ॥ अथ पत्तिलक्षणपरिच्छेदः ॥



उक्तानि चतुरङ्गस्य त्रीण्यङ्गान्यथ वर्ण्यते ।
पत्तिरूपं चतुर्थाङ्गं संक्षेपाद्युद्धसाधनम् ॥ १ ॥

वाहनैश्चरणं युद्धे तदधीनं हि जीवितम् ।
युध्यन्ते पत्तयस्सर्वे प्रज्ञयैव स्वकीयया ॥ २ ॥

दुर्गयुद्धे रात्रियुद्धे प्रशस्यन्ते पदातयः ।
गजैर्वा स्यन्दनैर्वापि वाजिभिर्वा न शक्यते ॥ ३ ॥

यत्र गन्तुं वने शैले पत्तयस्तत्र योधिनः ।
वने शैले रिपूनेते नाशयन्ति पदातयः ॥ ४ ॥

न प्रयान्त्यातपे यत्र करिणो रिपुसंमुखम् ।
प्रयाणं कुर्वते तत्र सर्व एव पदातयः ॥ ५ ॥

न चलन्ति रथा यत्र वाजिनो वातिविक्रमाः ।
तत्र वर्षास्वपि रणे युध्यन्ति हि पदातयः ॥ ६ ॥

वीक्षाविशेषनिपुणाः कृतिनश्च पदातयः ।
संग्रामे परिदृश्यन्ते छिन्दन्तः करिणां करम् ॥ ७ ॥

स्थानस्थिता लघूहा[श्च] क्रियावन्तोऽतिवेगिनः ।
सौष्ठवादिगुणैर्युक्ताः सर्वश्रेष्ठाः पदातयः ॥ ८ ॥

समपादादिषु स्थैर्यान्निर्भयाः श्रमनिर्जिताः ।
पूर्वपश्चिममुष्टीका जयदाः पत्तयो मताः ॥ ९ ॥

पूर्वकादिषु विज्ञाने निमित्तग्रहणे युताः ।
सकलभाषाः साहसज्ञा दुर्जयाश्च पदातयः ॥ १० ॥

बलवन्तस्सत्ववन्तो मर्मज्ञाः सूक्ष्मवेधिनः ।
युद्धभूमिविभागज्ञाः दुर्लभास्ते पदातयः ॥ ११ ॥

सादिनः पातयन्त्येते पत्तयो वीर्यवत्तराः ।
सुशिक्षिताः पलाय्यन्ते सादिनोऽपि पदातयः ॥ १२ ॥

नानाशास्त्रेषु निपुणाः नानाशस्त्रप्रहारिणः ।
युद्ध्यमानाः पादचारैः पत्तयः परिकीर्तिताः ॥ १३ ॥

न स्वाधीना गतिस्तेषां हस्त्यश्वरथचारिणाम् ।
स्वच्छन्दगतयो युद्धे पत्तयस्तु मतं हि नः ॥ १४ ॥

केचिद्धनुर्धराः केचिच्चर्मिणः खड्गपाणयः ।
शाक्तिकाः पत्तयः केचित्केचिद्य[न्त्रै]त्रैकपाणयः ।
केचित्तोमरहस्ताः स्युः केचिद्भल्लैकपाणयः ॥ १५ ॥

केचित्कुन्तधराः केचित् कट्टारकधरास्तथा ।
मल्लयुद्धेषु निपुणाः पत्तयो रणमूर्धनि ॥ १६ ॥

पणीकृतप्राणगता यत्र तत्र जयो ध्रुवम् ।
गतागतेषु नैपुण्यं धनुर्विद्यादिकौशलम् ॥ १७ ॥

युद्धोपयोगि पत्तीनामुक्तमन्यत्सुलक्षणम् ।
सामुद्रिकं तद्विज्ञेयमन्यसाधारणं च तत् ।
सामुद्रिककामधेना [वु]उक्तमित्यत्र नोच्यते ॥ १८ ॥

इति श्रीमन्महाराजाधिराजगजपतिप्रतापरुद्रदेवस्वहस्तधारितकनककेसरिचतुष्टयावेष्टित-
शांतकुम्भमयकुम्भसंभृतमेघाडंबराभिधानसितातपत्रशोभमानकविपुङ्गव-
पण्डितराजराजगुरुवाजपेययाजिमन्त्रिवरगोदावरमिश्रविरचिते
हरिहरचतुरङ्गे चतुर्थः पत्तिपरिच्छेदः ॥

---

## ॥ अथ धनुर्विद्यापरिच्छेदः ॥



चतुरङ्गबलं प्रोक्तं न च युद्धक्रियाक्षमम् ।
धनुर्विद्यासुनिपुणधानुष्केन विना ततः ॥ १ ॥

धनुर्वेदं समालोच्य तथैवेशानसंहिताम् ।
वीरचिन्तामणिं वीक्ष्य श्रीकोदण्डचतुर्भुजम् ॥ २ ॥

सारसंग्रहमालोच्य धनुःशास्त्रान्तराणि च ।
वक्ष्यतेऽत्र धनुर्विद्यासारभूतार्थसञ्चयः ॥ ३ ॥

गुणोऽयं कार्मुकस्यैकः कस्यान्यस्य स दृश्यते ।
इष्टो यश्चात्मरक्षायै विपक्षानुच्छिनत्ति च ॥ ४ ॥

धर्ममर्थं च कामं च मोक्षं चाप्नोति भूमिपः ।
धनुषा साधितं राष्ट्रं तेनैव परिपालयन् ॥ ५ ॥

यानि शास्त्राणि लोकेऽस्मिन् प्रणीतानि मनीषिभिः ।
धनुषो गोचरे तानि न तेषां गोचरे धनुः ॥ ६ ॥

जातप्रकृतिकोपस्य भिन्नमन्त्रस्य भूभुजः ।
प्रक्षीणदीर्घकोपस्य त्राता नात्र विना धनुः ।
दुर्वृत्तिनिग्रहे हिंसा पातको न धनुर्द्धरैः ॥ ७ ॥

शङ्क्यः प्रत्युत धर्मोऽयं यदुक्तं तत्त्वदर्शिभिः ।
एकोऽपि यत्र नगरे प्रसिद्धः स्याद्धनुर्धरः ।
तत्र यान्त्यरयो दूरं मृगाः सिंहगृहादिव ॥ ८ ॥

भिन्द्यादेकोऽपि दुर्भेद्यं गजारूढो धनुर्धरः ।
धन्व्येकःस्यन्दनारूढो वारयेत्परवाहिनीम् ॥ ९ ॥

धन्वी चेत्तुरगारूढो जयत्येकोऽपि मेदिनीम् ।
एकश्शतं योधयति प्राकारस्थो धनुर्धरः ॥ १० ॥

नातः परतरं शस्त्रं धनुषः पृथिवीपतेः ।
धनुर्धरस्य खड्गादिसहायाः परिकीर्तिताः ॥ ११ ॥

धनुर्गुणश्च बाणश्च गुरुः शिष्यश्च पञ्चमः ।
धनुर्विद्याङ्गमेतानि कथ्यन्ते क्रमशस्सह ॥ १२ ॥

यद्धनुः शास्त्रसंप्रोक्तमायुधानां परं धनुः ।
तस्यावयवसंस्थानं द्रव्यमत्राभिधीयते ।
तृणं द्रुमश्च शृङ्गं च दन्ताश्चेति प्रकीर्तिताः ॥ १३ ॥

चापे तालतृणेष्वग्रतरुष्वपि च धन्विनः ।
वीर्ये च बदरं श्रेष्ठं सालो वंशस्तथा स्मृतः ॥ १४ ॥

शृङ्गेषु सारभं श्रेष्ठं दन्तो दन्तेषु दन्तिनाम् ।
तेषामलाभे मुख्यानां वंशाद्यन्यतराणि च ॥ १५ ॥

यथालाभं प्रयोज्यन्ते कार्मुकार्थं धनुर्धरैः ।
मूलं तृणादेर्मूलं स्यादग्रं चापाग्रमिष्यते ॥ १६ ॥

पृष्ठं तु सारभागःस्याद्विपरीतं तथोदरम् ।
नेमिकश्चार्धनेमिश्च ऋजुकस्तृणकस्तथा ॥ १७ ॥

मत्स्योदरश्च पञ्चैव चापाकाराः प्रकीर्तिताः ।
ऋजुकं समवक्रं च नातिवक्रं सुदर्शनम् ॥ १८ ॥

षडंशेन तु दैर्घ्यस्य यत्स्थितं नैमिकं धनुः ।
तदर्धेन तथा वक्रं धनुः स्यादर्धनेमिकम् ॥ १९ ॥

उन्नतं [शृङ्गयोः] शङ्कयोश्चैव मध्ये च तृणकं विदुः ।
यद्भवेदृजु सर्वाङ्गे ज्ञेयं तदृजुकं धनुः ॥ २० ॥

मत्स्योदरं तु विज्ञेयमीषद्वक्रं तु यद्भवेत् ।
दूरपातेऽतिसूक्ष्माणां वेधे शीघ्रं च वेधने ।
नैमिकं च समादद्यात्तज्ज्येष्ठमिति कथ्यते ॥ २१ ॥

अर्धनेमिश्च तृणकं तथा यदृजुकं धनुः ।
मध्यमेतानि कथ्यन्ते हीनं मत्स्योदरं धनुः ॥ २२ ॥

प्रथमं यौगिकं चापं क्रियाचापं द्वितीयकम् ।
तृतीयं तु शलाकाख्यं व्याघातं तु चतुर्थकम् ॥ २३ ॥

पञ्चमं मिश्रितं चापं षष्ठं सांग्रामिकं तथा ।
सप्तमं दूरपातं च दृढस्फोटं तथाऽष्टमम् ॥ २४ ॥

विकर्षं नवमं प्राहुः फणीन्द्रं दशमं धनुः ।
बलज्ञानं विना नैषां लक्षणं ज्ञायते यतः ॥ २५ ॥

बलज्ञानाय धनुषामुपायः कथ्यते ततः ।
या मध्यभागे संश्लिष्य बाणं सन्धार्य च स्थिरम् ॥ २६ ॥

शिक्यं तस्य गुणे बध्वा पाषाणैः परिपूरयेत् ।
यावत्कण्ठान्तमायाति शिक्यस्याभिमुखं शिरः ॥ २७ ॥

शिक्यान्तरस्थाः पाषाणा यावन्तस्तुलया धृताः ।
यावत्पलप्रमाणाः स्युः तावत्प्राणं च तद्धनुः ।
सर्षपैश्च चतुर्भिः स्याद्यवस्तत्संख्यकैर्यवैः ॥ २८ ॥

एरण्डकश्चतुर्भिस्तैर्माषो द्वादशमाषकम् ।
तोलं स्यात्पञ्चतोलं च पलं तेन पलेन च ॥ २९ ॥

धनुषां बलमानं स्याद्धनुश्शास्त्रेषु निश्चितम् ।
द्वि[श]षतं यौगिकं चापं त्रिशतं तु क्रियाधनुः ॥ ३० ॥

चतुःशतं शलाकाख्यं व्याघातं शतपञ्चकम् ।
वामे शतत्रयं चापं दक्षिणे द्विशताधिकम् ॥ ३१ ॥

उभौ चापौ करस्थौ च ताभ्यां च क्रियते श्रमः ।
संग्रामे कार्मुकं कुर्यात्तथा सप्तशतं दृढम् ॥ ३२ ॥

दृढस्फोट सहस्रेण विकर्षं च शताधिकम् ।
द्विसहस्रपलेनैव फणीन्द्रं संप्रकीर्तितम् ॥ ३३ ॥

अथोच्यते च धनुषां प्रमाणं कस्य कीदृशम् ।
पञ्चहस्तेन सार्धेन श्रेष्ठं चापं प्रकीर्तितम् ॥ ३४ ॥

तद्विज्ञेयं धनुर्दिव्यं शङ्करेण तु धारितम् ।
तस्मात्परशुरामेण ततो रामेण धारितम् ।
द्रोणेन धारितं तस्माद् द्रोणादेवार्जुनेन च ॥ ३५ ॥

तथार्जुनात्सात्यकिना तद्दिव्यं धनुरुच्यते ।
ईश्वरेण धृतं सत्ये त्रेतायां राघवेण तु ॥ ३६ ॥

द्वापरे द्रोणविप्रेण दिव्यचापः प्रकीर्तितः ।
शार्ङ्गं पुनर्धनुर्दिव्यं विष्णोः परममायुधम् ॥ ३७ ॥

वितस्तिस्सप्तमानं स्यान्निर्मितं विश्वकर्मणा ।
न स्वर्गे न च पाताले न भूमौ कस्यचित्करे ॥ ३८ ॥

तद्धनुःश्रेष्ठमायाति मुक्त्वैकं पुरुषोत्तमम् ।
पौरुषेयं तु यच्छार्ङ्गं तस्य मानमुदीरितम् ॥ ३९ ॥

वितस्तिभिस्सार्धषड्भिः तच्च सर्वार्थसाधकम् ।
चतुर्विंशाङ्गुलो हस्तश्चतुर्हस्तं धनुस्स्मृतम् ॥ ४० ॥

स भवेन्मानवश्चापः सर्वलक्षणसंयुतः ।
केषांचिच्च भवेच्चापो वितस्तिर्नवसंमितः ॥ ४१ ॥

कोदण्डश्च ललाटान्तः कार्मुकं बाहुसंमतम् ।
त्रिपर्वं कुरुते श्रेयः पञ्चपर्व धनागमम् ।
सर्वलक्षणसंयुक्तं सप्तपर्वं जयावहम् ॥ ४२ ॥

एकाधिकं शतं चैव सर्वसिद्धिप्रदायकम् ।
पर्वद्वययुतं त्याज्यं ध्रुवं मृत्युकरं धनुः ॥ ४३ ॥

धनहानिकरं ज्ञेयं चतुःपर्वान्वितं धनुः ।
षडष्टप[र्वं]संयुक्तं धनुर्विघ्नप्रदं मतम् ॥ ४४ ॥

मृत्युदं दशपर्वं स्यान्मध्यमं नवपर्व च ।
ऊर्ध्वमेकादशान्नैव पर्वणो हि भवेद्धनुः ॥ ४५ ॥

मासि भाद्रपदे प्राप्ते कृष्णपक्षे भवेद्दिने(?) ।
सुपांशुकठिनं वि[वं]शं छित्वा मूलादुपाहरेत् ॥ ४६ ॥

भग्नं भग्नत्वचं चैव वयोऽतीतं च वर्जयेत् ।
कीटदष्टं विदीर्णं च नाशयेत्तादृशं ध्रुवम् ॥ ४७ ॥

हस्तिभग्नद्रुमा ये च विद्युद्दग्धास्तथैव च ।
आरामदेवतावेश्मतापसाश्रमसंभवाः ॥ ४८ ॥

श्मशानसंभवा ये च न ते कार्याः कथञ्चन ।
प्राणिनामपि यः शृङ्गी जित्वा युधि निपातितः ।
तच्छृङ्गं वर्जयेन्नित्यं शार्ङ्गे धनुषि शार्ङ्गवित् ॥ ४९ ॥

प्रायो यो[ग्यं]ग्धां धनुःशार्ङ्गं गजारोहाश्वसादिनाम् ।
रथिनां च पदातीनां चाप एव प्रशस्यते ॥ ५० ॥

शार्ङ्गं धनुः प्रशस्तं स्याच्चतुरङ्गे धनुः स्मृतम् ।
इति ब्रूमो वयं त्वन्यद्धनुर्गतद्विना मतम् ॥ ५१ ॥

कोटिद्वयं स्याद्ग्रन्थेः द्वादश द्वादशांगुलम् ।
तयोर्मध्यं धनुर्मध्यं मुक्तपर्वं प्रपूरितम् ।
अटिनी कर्णिका शंखः स्कन्धाः कोट्यन्तरे स्थिताः ॥ ५२ ॥

पल्लवो लस्तको मध्ये षडङ्गं धनुरुच्यते ।
अटिन्यावग्रयोस्स्यातामंगुलित्रयमायते ॥ ५३ ॥

स्निग्धे समे सुवृत्ते च चाम्पेयकलिकाकृती ।
अथाटिन्योस्तयोर्मूलात्पार्श्वयोरुभयोरपि ॥ ५४ ॥

अङ्गुल्यश्च चतस्रस्तु शङ्खौ स्यातां सकर्णकौ ।
कर्णिकाया अधस्ताच्च स्कन्धं पञ्चांगुलं विदुः ॥ ५५ ॥

अधस्तात्स्कन्धयोः स्यातां पल्लवौ चापमध्यगौ ।
तथा पल्लवयोर्मध्ये क्षिप्तं लस्तकसंज्ञकम् ॥ ५६ ॥

धनुषो लस्तकं कार्यं द्वादशांगुलसंमितम् ।
उभे जिह्वे तस्य कुर्यादंगुलित्रयमानतः ॥ ५७ ॥

पर्वणो मध्यमस्यैव मध्यस्थो लस्तकः शुभः ।
दन्तिदन्तेन काष्ठैर्वा द्वादशांगुलमानतः ॥ ५८ ॥

लिङ्गितं चापमध्ये तु न्यस्तं लस्तकमुच्यते ।
केचित्सप्तांगुलं प्राहुः केचित्तच्च षडंगुलम् ॥ ५९ ॥

उत्तमाधममध्यानां धनुषां मानभेदतः ।
लस्तकं च त्रिधा कार्यमिति ब्रूमो वयं पुनः ॥ ६० ॥

गुणानां लक्षणं ब्रूमो यादृशं कारयेद्गुणम् ।
पट्टसूत्रैर्गुणः कार्यः सर्वकर्मसहो युधि ॥ ६१ ॥

अभावे पट्टसूत्रस्य हरिणीस्नायुरिष्यते ।
तदभावे गवां ग्राह्या माहिषी वापि संमता ॥ ६२ ॥

पक्ववंशत्वचः कार्यो गुणो वा स्याद्दूरो दृढ. ।
ग्रीष्मकालोद्भवाया वा मूर्वायाःस्याद्गुणो दृढः ।
शरत्कालोद्धृतार्कस्य वल्कलेनापि संमतः ॥ ६३ ॥

धनु प्राणानुसारेण गुणस्य स्याद्विशालता ।
धनुर्यथा सुमज्जं स्यात्तथा दैर्घ्यं प्रकल्पयेत् ॥ ६४ ॥

भवन्त्यतः त्रयः पाशास्तत्राद्य· स्वस्तिको मतः ।
शंबुकावर्तनं चापि वीणापाशस्तथा स्मृतः ॥ ६५ ॥

वामपाणिधृतं चापमधोमूलमधस्स्थितिम् ।
पादेनाक्रम्य दक्षेण पाणिना योजयेद्गुणम् ॥ ६६ ॥

ऊरुमूलेन वामेन शार्ङ्गं संपीड्य यत्नतः ।
अतिपीडितपृष्ठस्य तस्याग्रं दक्षिणांशके ॥ ६७ ॥

समानीतं समानस्य दक्षिणेन करेण तु ।
वामेन पाणिना तस्मिन्गुणं युञ्ज्याद्धनुर्धरः ॥ ६८ ॥

युक्तं गुणेनापि धनु. विना बाणं न कार्यकृत् ।
अतस्तस्य क्रमप्राप्तानिष्वादीन्संप्रचक्ष्महे ॥ ६९ ॥

स्यादस्थिसारस्त्वक्सारः सर्वसारस्त्रिधा शरः ।
क्रमेण लक्षणं तेषामृषिभाषितमुच्यते ।
अस्थिसारश्च विज्ञेयो द्रुमगुल्मादिजः शरः ॥ ७० ॥

त्वक् सारश्च तथा ज्ञेय शरवंशा[दि]द्विजः शरः ।
अस्थिदन्तश्च शृङ्गं च लोहजातीयकाश्च ते ॥ ७१ ॥

सर्वसार इति प्राहुः शरद्रव्यविनिर्णये ।
शरो विशालपूर्वाक्षो दृढवर्तुलविग्रहः ॥ ७२ ॥

अवक्रोऽनुन्नतग्रन्थिः शरराजः प्रकीर्तितः ।
अग्रे स्थूलः पुमान् ज्ञेयः पश्चात्स्थूलं स्त्रियं विदुः ॥ ७३ ॥

समं नपुंसकं ज्ञेयं शराश्च त्रिविधा मताः ।
दूरपाते स्त्रियो योज्या लक्षभेदे नपुंसकम् ॥ ७४ ॥

दृढस्फोटे पुमान् योज्यो धनुर्वेदविशारदैः ।
परिणाहः श्रेष्ठशरे द्व्यङ्गुलं स्यात्तु मध्यमे ॥ ७५ ॥

सार्धाङ्गुलं कनिष्ठे च भवेदङ्गुलमात्रकम् ।
मानं शराणां त्रिविधं ज्येष्ठमध्यकनिष्ठकम् ॥ ७६ ॥

विभागेनोपयुज्यन्ते तदेतदभिधीयते ।
मुष्टयो द्वादशाद्यस्य सार्धैकादशकोऽपरः ।
कनीयान्मुष्टिभिर्बाणः स्यादेकादशभिर्मतः ॥ ७७ ॥

योऽतिस्थूलो महासूक्ष्मो लघीयान् कीटदूषितः ।
हीनग्रन्थिस्स प्रयत्नाद्वर्जनीयः शराधमः ॥ ७८ ॥

यो वक्रः पक्षहीनश्च निस्सारः पाकवर्जितः ।
अदृढो मानहीनश्च बाणोऽसावतिनिन्दितः ॥ ७९ ॥

मुखकर्णौ तथा स्कन्धो गात्रं पत्रासनं तथा ।
जङ्घा पुंखं च विशिखे सप्ताङ्गान्युपकल्पयेत् ।
लोहपाषाणदन्तास्थिखुरशृङ्गतृणोद्भवम् ॥ ८० ॥

काष्ठजं चेति निर्दिष्टं पुंखमष्टविधं बुधैः ।
पिच्छं पर्णं च वस्त्रं च तृणं वल्कं च चर्म च ॥ ८१ ॥

लोहं चेति विनिर्दिष्टाः सप्तैता वाजयोनयः ।
तासां पिच्छं मतं श्रेष्ठं पिच्छेष्वपि च गृध्रजम् ॥ ८२ ॥

कङ्कहंसबकादीनां मत्स्यादक्रौञ्चकेकिनाम् ।
गृध्राणां कुरराणां च पक्षा एते सुशोभनाः ॥ ८३ ॥

श्येनस्य कुक्कुटस्यापि सारसस्य तथैव च ।
भासस्य गरुडस्यापि पक्षाश्शस्ता मताः शरे ॥ ८४ ॥

आयसेषूत्तमं दद्यान्मध्यमेषु च मध्यमम् ।
मृदूनि मृदुकाण्डेषु यथावदनुपूर्वशः ॥ ८५ ॥

नाराचादेश्च यत्पत्रं तत्तु सप्ताङ्गुलं भवेत् ।
शरेष्वपि च पत्राणि पञ्च पञ्चैव कारयेत् ॥ ८६ ॥

दशांगुलमिताः पक्षाः शार्ङ्गचापस्य मार्गणे ।
योज्यास्त्रियाः चतुःपक्षाः सन्नद्धाः स्नायुतन्तुभिः ॥ ८७ ॥

एकैकस्य शरस्यैव पञ्च पत्राणि योजयेत् ।
षडंगुलप्रमाणेन पत्रच्छेदं च कारयेत् ॥ ८८ ॥

सप्तांगुला पत्रपालिः उन्नतं चांगुलत्रयम् ।
पत्रमंगुलमानेन कर्तव्यं मध्यमे खगे ॥ ८९ ॥

अर्धाङ्गुलसमुच्छ्राया कर्तव्या च कनीयसी ।
श्लेषणार्थं प्रशस्यन्ते स्नायवः शरकर्मणि ॥ ९० ॥

तदभावे तदर्धं च वृक्षनिर्यास इष्यते ।
वालं वल्कं च सूत्रं च कौशेयं चेति वेष्टकम् ।
शरस्य मुखपुंखादि सन्धिस्थानेषु संमतम् ॥ ९१ ॥

अथेषूणां समस्तानां मुखस्थानस्य योनयः ।
आयपाश्मास्थिदन्ताश्च शृङ्गकाष्ठतृणान्यपि ॥ ९२ ॥

फलं च शुद्धलोहस्य सुधारं तीक्ष्णमक्षतम् ।
योजयेद्व्रज्रलेपेन शरे पक्षानुसारतः ॥ ९३ ॥

तेषां चतुर्विधं कर्म संस्थानं बहुधा स्थितम् ।
छेदनं भेदनं चैव व्यूहनं च विदारणम् ॥ ९४ ॥

मुखसंस्थानगे भेदस्तेषां भवति कर्मणाम् ।
स्वकर्मणि नियोक्तव्यं मुखं तस्माद्विजानता ॥ ९५ ॥

नानाभेदविभेदार्थं मुखनानात्वमुच्यते ।
अर्धचन्द्रः खुरप्रश्च भल्ल स्यात्काकतुण्डकः ॥ ९६ ॥

तथा वज्रमुखः कश्चित्तथा कोशातकीमुखः ।
एलामुखस्तथा शूरीमुखः शल्यकपत्रकः ॥ ९७ ॥

सितशूरीमुखःकश्चित्कश्चिच्चापमुखस्तथा ।
भवेदुष्ट्रमुख कश्चित्सिहदंष्ट्रामुखस्तथा ।
कुमुदाग्रमुखः कश्चिद्गण्डूपदमुखस्तथा ॥ ९८ ॥

मालतीमुकुलाग्रश्च ताम्रचूडाननस्तथा ।
कण्टकास्यमुख.कश्चित्कश्चिद् व्रीहिमुखस्तथा ॥ ९९ ॥

खर्जूरिकण्टकास्यश्च नागदंष्ट्रामुखस्तथा ।
स्यादुत्पलदलाकारः कश्चित्पालाशिकस्तथा ॥ १०० ॥

कंकास्यश्च बकास्यश्च शतपत्रमुखस्तथा ।
मृद्वीकाग्रो मीनपुच्छःकरवीरमुखस्तथा ॥ १०१ ॥

अन्यान्यपि यथायोग्यं मुखान्येषां प्रकारयेत् ।
यावन्ति वृक्षपत्राणि पुष्पाणि च फलानि च ॥ १०२ ॥

तावन्त्यास्यानि कार्याणि बाणे बाणविशारदैः ।
नवीनरजनीनाथकलाकारमुखः खगः ।
छिन्द्याच्छिरः शरं तद्वत्कार्मुकं करिणः करम् ॥ १०३ ॥

भुजच्छेदं करच्छेदं पादच्छेदं च शक्तिनः ।
छेदत्रयं क्षुरप्रेण कारयेत् दृढमुष्टिना ॥ १०४ ॥

भल्लेन हृदयं वेध्यं मांसमात्रमथापि वा ।
लोहं भिन्द्यात्काकतुण्डः शिलां वज्रमुखस्तथा ॥ १०५ ॥

कोशातकीमुखः काष्ठमेलास्यः पट्टमस्थि च ।
वर्म शूरीमुखो भिन्द्यात्तथा शल्यकपत्रकः ॥ १०६ ॥

विभिन्द्यात्करिणां कुम्भं तथा चापमुखः खगः ।
उष्ट्रास्यः सिंहदंष्ट्रास्यः कुमुदाग्रमुखस्तथा ॥ १०७ ॥

गण्डूपदमुखः च्छिन्द्याद्विषाणानि दृढान्यपि ।
मालतीकुड्मलमुखस्ताम्रचूडाननस्तथा ॥ १०८ ॥

मुखं भिन्द्यात्सुसूक्ष्मं च प्रेरितः सूक्ष्मदर्शिना ।
कण्टकास्यो व्रीहिमुखः खर्जुरीकण्टकस्तथा ॥ १०९ ॥

नागदंष्ट्रामुखो भिन्द्याद्वालुकापूरपूरितम् ।
आर्द्रचर्मसमूहे च छिन्द्यादुत्पलपत्रकः ॥ ११० ॥

पालाशिकास्यः कंकास्यो बकास्यः शरपत्रकः ।
मृद्वीकाग्रो मीनपुच्छः करवीरमुखस्तथा ॥ १११ ॥

मिश्रितं प्रतिकायं च भिन्द्याच्च निशितः खगः ।
न ह्यपातं हि शस्त्राणामपि शुद्धायसं खगम् ।
कुर्यात्तु विविधं कार्यं तस्मात्पायनमुच्यते ॥ ११२ ॥

आराकर्मविधानज्ञो धाराकर्मविचक्षणः ।
सहाभियोगनिपुणः पाययेदायसं मुखम् ॥ ११३ ॥

पिप्पलीं सैन्धवं कुष्ठं गोमूत्रेण तु पाययेत् ।
अनेन लेपयेच्छस्त्रं लिप्तं चाग्नौ प्रतापयेत् ॥ ११४ ॥

पीतनष्टौषधं लोहं तैले निर्वापयेत्ततः ।
पञ्चभिर्लवणैः पिष्टैः मधुसिक्तैः ससर्पिषैः ॥ ११५ ॥

पुनः प्रलेपयेच्छस्त्रं लिप्तं चाग्नौ प्रतापयेत् ।
विशिष्टं चाग्निवर्णाभं शस्त्रं पीतौषधं यदा ॥ ११६ ॥

तदा तु विमले तोये पाययेच्छस्त्रमुत्तमम् ।
एवं हि पायितं शस्त्रं दिव्यौषधिविलेपनैः ॥ ११७ ॥

अपि दुर्भेद्यवर्मादि भेदयेत्तरुपर्णवत् ।
नाराचशरसंघातभेदाद्बाणास्त्रिधा मताः ॥ ११८ ॥

काष्णायसः स्यान्नाराचः शरवेण्वादिजः शरः ।
नाराचः शरसंयुक्तः संघात इति कीर्तितः ।
नाराचशरसंघाताः मुखभेदादनेकधा ॥ ११९ ॥

भवन्ति मुखभेदाश्च प्रोक्ताः पूर्वमनेकधा ।
शलाकाभ्याससिद्ध्यर्थं शलाकापि निरूप्यते ॥ १२० ॥

शलाकार्थं प्रशस्यन्ते दृढवंशाः स कण्टकाः ।
भूलिङ्गः कृष्णवेणुर्वा शलाकार्थे विधीयते ॥ १२१ ॥

न केवलं वेणुमयाः शरदन्तमया अपि ।
अश्मसारमयां वापि शलाकां कल्पयेद्बुधः ॥ १२२ ॥

चतुरश्राः शलाकास्स्युः दृढाः पुष्टाश्च मार्जिताः ।
मुखपुङ्खादिकं तासां बाणवत्परिकल्पयेत् ॥ १२३ ॥

धनुःप्राणानुसारो स्याद्गुणस्तदनुसारतः ।
बाण(:) स्यात्समयोगो हि त्रयाणां फलसाधनम् ॥ १२४ ॥

विषमाणां धनुर्बाणगुणानां योगतः पुनः ।
नार्थसिद्धिरिति प्राहुश्चापाचार्याः कृतश्रमाः ॥ १२५ ॥

धनुर्वेदार्थतत्वज्ञो धर्मज्ञश्च कृतश्रमः ।
प्रकृष्टसत्वो बलवान्कीर्तिमांश्च भवेद्गुरुः ।
अतिलुब्धो धनुर्वेदे(द) विहीनश्चाकृतश्रमः ॥ १२६ ॥

वञ्चकस्सत्वहीनश्च गुरुं [रुः] स्यान्नाजितेन्द्रियः ।
उत्साहशीलः प्रज्ञावानुद्योगाध्यवसायवान् ॥ १२७ ॥

शूरः सत्वगुणोपेतः शिष्यस्स्यात्कुलशीलवान् ।
श्यावदन्तः सत्वहीनः कृतघ्नो गुरुवञ्चकः ॥ १२८ ॥

प्रज्ञोत्साहबलैर्हीनो न शिष्यत्वेन संमतः ।
गुरुशुश्रूषकश्शिष्यो गुरु[:]शिष्यैकवत्सलः ॥ १२९ ॥

समायोगोऽर्थसिद्ध्यै स्यान्नै[द्वै]परीत्ये विपर्ययः ।
यच्च किञ्चिद्धनुर्वेदविहितं कर्म वक्ष्यते ॥ १३० ॥

अनध्याये न तत्कुर्यादनिष्टफलदो हि सः ।
अष्टमी च गुरुं हन्ति शिष्यं हन्ति चतुर्दशी ॥ १३१ ॥

अमावास्या वधं कुर्यादुभयोर्गुरुशिष्ययोः ।
पौर्णमास्यां सन्ध्ययोश्च तथा मृतकसूतके ॥ १३२ ॥

दिनक्षये महावाते विश्रमं कारयेद्गुरुः ।
गुरुरभ्यागतो यत्र दिने कुत्राप्यचिन्तितः ।
तत्राकाले गर्जिते च दुर्दिने सर्पदर्शने ॥ १३३ ॥

अथवा भज्यते चापं यदैव श्रमकर्मणि ।
त्रुट्यते वा गुणो यत्र प्रथमे बाणमोक्षणे ॥ १३४ ॥

श्रमं तत्र न कुर्वीत शस्त्रैर्मतिमतां वरः ।
ततः कृतनमस्कारं शिष्यं विद्यार्थिनं गुरुः ॥ १३५ ॥

अभ्यासार्थं कृते प्राच्यामुदीच्यां वापि सद्मनि ।
धनुर्वेदविधानज्ञः सूत्रायामे नियोजयेत् ॥ १३६ ॥

दृढसूत्रं द्विकानिष्ठं मध्यङ्गं गुणचापयोः ।
निबध्य धनुराकर्षेद्यावत्सूत्रं प्रपूरयेत् ॥ १३७ ॥

सूत्रायामपिह(समा)कर्षे दार्ढ्यं कर्माभिनिन्दितम् ।
द्विजानामुपनीतानामोंकारश्छन्दसामिव ॥ १३८ ॥

सूत्रायामे स्थिरं वीक्ष्य ज्याघातेऽपि नियोजयेत् ।
तस्मिद्धार्थे च सिध्यन्ति क्रियास्सर्वा धनुर्भृताम् ॥ १३९ ॥

शरतुल्यं चित्रदण्डं ज्यायुक्तं कृष्यते तु यत् ।
मुहुर्मुष्टिधनुर्बाणसिध्यै ह्या (ज्या)घात इष्यते ।
ज्याघातलब्धसिद्धिं तु वीक्ष्य शिष्यं गुरो(रु)ः क्रमात् ॥ १४० ॥

बद्धगोधांगुलित्राणं शिक्षाधानाङ्गसंस्थितिः ।
कारयेत्पुष्पवेधं तु फलहीनेन पत्रिणा ॥ १४१ ॥

पुष्पवेधे कृताभ्यासं गुरुः शिष्यं क्रमादमुम् ।
आर्द्रकाष्ठच्छिदाभ्यासे योजयेल्लक्ष्यसिद्धये ॥ १४२ ॥

गोपुच्छाकृतिकं काष्ठं सार्धं लक्षतया न्यसेत् ।
तच्छिन्द्याच्च क्षुरप्रेण मुहुर्मुहुरतन्द्रितः ॥ १४३ ॥

रात्रौ निर्वातदेशे च दीपं लक्षतया न्यसेत् ।
नाराचेन च तद्वेधं कारयेल्लक्ष्यसिद्धये ॥ १४४ ॥

मत्स्यवेधं च भल्लेन कारयेल्लक्ष्यसिद्धये ।
मांसवेधं ततः कुर्यान्नाराचेन शुभाप्तये ॥ १४५ ॥

मांसवेधो मयाऽद्यैव कर्तव्य इति चेतसा ।
निश्चित्य शिष्यसंहृष्टो देवताभ्यो बलिं क्षिपेत् ॥ १४६ ॥

स्नातः शुद्धः शुक्लवासाः सितमाल्यानुलेपनः ।
पवित्रपाणिराचम्य ब्राह्मणान् स्वस्ति वाचयेत् ।
दध्यक्षतोदनैः प्राच्यां ब्रह्मशक्रपुरस्सरान् ॥ १४७ ॥

भक्त्या सन्तर्पयेद्देवान् कश्यपादीनृषीनपि ।
बलिं क्षिपेद्विचित्रं तु पुष्पधूमो(पो)पबृंहितम् ॥ १४८ ॥

ऋग्वेदादीनथर्वान्तान् धनुर्वेदविशारदान् ।
धनूंषि सूत्रायामादीन्यस्त्रग्रामं च पूजयेत् ॥ १४९ ॥

शुक्रगौतमशाण्डिल्यजमदग्निबृहस्पतीन् ।
धनुर्वेदगुरूंश्चा[ऽग्ना]ग्रान् तर्पयेद्बलिकर्मणा ॥ १५० ॥

देवेभ्यो बलिमाहृत्य दक्षिणाभिमुखं पशुम् ।
छागं वाह्य[ह]रिणं वापि गन्धमाल्यादिभूषितम् ॥ १५१ ॥

मांसं भित्वार्धभागेन बाणो यत्रावतिष्ठत ।
कोशं वाहनमाप्नोति जित्वा शत्रून् महाहवे ॥ १५२ ॥

भित्वा मांसं त्रिभागेन यस्य तिष्ठति सायकः ।
हृष्टः पुष्टिर्यशस्तस्य संपत्स्यन्ते यथेप्सिताः ॥ १५३ ॥

सुशुभां गतिमासाद्य भित्वा चोभयतः समम् ।
प्रसन्नोयः पते[त्] बाण. सन्नः स्सर्वार्थसाधकः ।
पुनश्च देवताः शिष्यो ब्राह्मणांश्च गुरूंस्तथा ॥ १५४ ॥

अभिवाद्य तथाशीर्भिर्विर्धितो लभते जयम् ।
पुंखेन कायमाच्छाद्य यदा भूमिं व्रजेच्छरः ॥ १५५ ॥

तदाधिवेदं(धं) जानीयाद्धनुश्शास्त्रविशारदः ।
अतिवेधान्नलभते फलानि तु कदाचन ॥ १५६ ॥

दुर्विबोधा भवेद्यश्च नासौ शुभफलप्रदः ।
मांसवेधे समारब्धे धनुर्भङ्गो विनाशकृत् ॥ १५७ ॥

मरणे(णं) च गुणे च्छिन्ने पुंखभेदे सुतक्षयः ।
आधिभ्यश्च महाभूतिः शरभङ्गश्च दोषकृत् ॥ १५८ ॥

मांसवेधे शरगतिः या शुद्धा दोषवर्जिता ।
साम्याच्छुभफलप्राप्त्यै सदोषास्त्वशुभप्रदाः ॥ १५९ ॥

नानाविधगति[ती]र्भ्रमः सदोषास्तत्फलान्यपि ।
क्रमेण लक्षणं तासामप्यस्माभिरिहोच्यते ॥ १६० ॥

वामगा दक्षगा चैवमूर्ध्नि(र्ध्व)गाधोगता तथा ।
गोमूत्रिका शीतिका च कैराती कम्पना(नी) भ्रमी ।
यदा गच्छति लक्षस्य वामतो वामगा हि सा ॥ १६१ ॥

दक्षिणागमने तावद्दक्षगा परिकीर्तिता ।
ऊर्ध्वाधोगमने तद्वदूर्ध्वगाऽधोगता भवेत् ॥ १६२ ॥

दक्षिणां तु दिशं गत्वा पुनर्वामेन गच्छति ।
दुर्निमित्तेन चेद्बाणो गोमूत्री सा गतिर्भवेत् ॥ १६३ ॥

गुरुर्मौर्वी लघुश्चापः शीतगां(तिकां) तु गतिं दिशेत् ।
गत्वा चोर्ध्वं तथाऽधस्तादनिमितं(त्तं) खगो व्रजेत् ॥ १६४ ॥

यदा भ्रमति वै वेगात्कैराती सा गतिर्भवेत् ।
मुखमध्ये गुणो यत्र पीड्यते धन्विना क्वचित् ॥ १६५ ॥

कंपने तेन नाराचो गतिः कंप[न्यु]त्युदाहृता ।
श्रमहीनो भवेद्धन्वी विकर्षेत्कठिनं धनुः ॥ १६६ ॥

तदा भ्रमति नाराचः सा गतिर्भ्रामिका स्मृता ।
हन्ति स्थानं वामगा या द्वितीया बन्धु(न्ध)नाशनी ॥ १६७ ॥

ऊर्ध्वगा तु वहेद्दुःखमाधिं चाधोगता वहेत् ।
गोमूत्रिका गतिः कोशक्षयं कुर्यान्न संशयः ।
शीतिका शिष्यमाहन्यात्कंपनी तु कुलद्वयम् ॥ १६८ ॥

आचार्यं हन्ति कैराती भ्रमी प्रकृतिनाशिनी ।
वेधने चैव मांसस्य नाराचपतनं यदि ॥ १६९ ॥

पूर्वदिग्भागमाश्रित्य तदा स्याद्विजयो ध्रुवम् ।
पश्चिमे धनधान्यं स्यादुत्तरे सर्वमुत्तमम् ॥ १७० ॥

वायव्यां पतनं चापि हर्य[ह्यर्थ]पुष्टिकरं मतम् ।
दक्षिणे कलहं घोरं विदेशगमनं तथा ॥ १७१ ॥

ऐशान्यां तु तथाऽऽग्नेय्यां नैर्ऋत्यां पतनं यदा ।
अग्निशोकभयं विद्यात्तिसृष्वपि विदिक्षु च ॥ १७२ ॥

मांसमुत्सृज्य दैवाच्चेन्निर्गच्छत्यन्यतः शरः ।
अशुभानि निमित्तानि पूर्वोक्तानि भवन्ति वा ॥ १७३ ॥

मांसवेधं तदोत्सृज्य शान्तिकर्म समाचरेत् ।
कृत्वा शान्तिं पुनः शिष्यं कारयेन्मांसवेधनम् ॥ १७४ ॥

शुभे च तिथिनक्षत्रे करणे च यथाविधि ।
अत्रापि यदि ते दोषा दृश्यन्ते ये प्रकीर्तिताः ।
तदा तं वर्जयेच्छिष्यमयोग्यं श्रमकर्मणि ॥ १७५ ॥

विनोपनयनं शिष्यो नाधिकारी धनुःश्रमे ।
अतः कर्तव्यमाचार्यैस्तच्छिष्यस्य यथाविधि ॥ १७६ ॥

उपनीत(य)गुरुः शिष्यं धनुर्दानार्थमुत्तमे ।
भूप्रदेशे समे (शु)शुद्धे प्रागुदक्प्रवणे शुभे ॥ १७७ ॥

शीलं (शालां) कुर्यात्तत्र कर्म धनुर्वेदानुसारिणा ।
विधानेन गुरुः कुर्यात्कुण्डनिर्माणपूर्वकम् ॥ १७८ ॥

तत्र चिन्तामणौ तत्र(च) प्रोक्तं शालादिलक्षणम् ।
अस्मत्कृते वेदितव्यं तस्मादत्र न कथ्यते ॥ ३७९ ॥

मण्डलं चाग्रतस्तस्य कर्तव्यं सिद्धिमिच्छता ।
चतुर्हस्तं द्विहस्तं च एकहस्तप्रमाणतः ॥ १८० ॥

श्वेतरक्तैश्च पीतैश्च कृष्णैर्नीलैश्च वर्णकैः ।
सूक्ष्मरेखानिवेशेन चतुरश्रं सुशोभनम् ॥ १८१ ॥

जलजं तस्य मध्यस्थं लेखनीयं प्रयत्नतः ।
पूर्वोक्तैर्वर्णकैश्चैव साष्टपत्रं सकर्णिकम् ।
तस्योपरि निधातव्यं कलशं द्रोणसंज्ञकम् ॥ १८२ ॥

सहिरण्यं सवस्त्रं च सोपवीतं फलान्वितम् ।
पूरणीयं प्रयत्नेन सप्तधान्यैकधीमता(?) ॥ १८३ ॥

गोधूमेन यवेनापि पुष्पगन्धादिभिस्तथा ।
सुवर्णं रजतं वज्रं वैडूर्यं चैव मौक्तिकम् ॥ १८४ ॥

पद्मरागेन्द्रनीले च यथा शक्त्या विचक्षणः ।
तस्य मध्ये प्रदातव्यं स्वस्तिकं च हिरण्मयम् ॥ १८५ ॥

कोणेषु तस्य चतुरः कलशान्वारिपूरितान् ।
अश्वत्थपत्रसंच्छन्नान् गन्धोपेतान्निवेशयेत् ॥ १८६ ॥

पूर्वस्यां स्थापयेदिन्द्रमाग्नेय्यां च चतु(हवि)र्भुजम् ।
दक्षिणे धर्मराजं तु नैर्ऋते गरुडध्वजम् ॥ १८७ ॥

वरुणं वरुणाशायां वायव्यां श्वसनं न्यसेत् ।
उत्तरस्यां कुबेरं तु ऐशान्यां प्रभुमीश्वरम् ॥ १८८ ॥

गणाध्यक्षमहाकालं कुमारं नन्दिना सह ।
भृङ्गरीटं महावीर्यं धूम्राक्षं च महाबलम् ।
योगिन्यो मातरश्चैव गुह्यकाश्च विशेषतः ॥ १८९ ॥

आदित्येन ससोमेन ग्रहास्तत्रैव मण्डले ।
ऋषयस्सप्त तत्रैव स्थापनीयाः प्रयत्नतः ॥ १९० ॥

सुगन्धिपुष्पधूमै(पै)श्च कर्पूरागरुचन्दनैः ।
फलैश्च विविधाकारैः नारिकेलादिदाडिमैः ॥ १९१ ॥

नारङ्गबीजपूरैश्च मण्डले पूजयेद्बुधः ।
शर्करागुडग(ख)ण्डैश्च नैवेद्यानि तु कारयेत् ॥ १९२ ॥

ब्राह्मणान् पूजयेत्तत्र कुमारीश्चाप्यनेकशः ।
तापसानर्चयेद्भक्त्या आचार्यं श्रमितास्तथा ॥ १९३ ॥

कृतोपवासं शिष्यं च पञ्चगव्येन शोधयेत् ।
कृताञ्जलिपुटः शिष्यो याचे[चयेच्च]त(च) गुरुं धनुः ॥ १९४ ॥

अङ्गन्यासं ततः कुर्याच्छिवोक्तं सिद्धिमिच्छता ।
आचार्येण च कर्तव्यं पापघ्नं विघ्ननाशनम् ॥ १९५ ॥

शिखास्थाने न्यसेदीशं बाहुयुग्मे(च)न केशवम् ।
ब्रह्माणं नाभिमध्ये तु जङ्घयोश्च गणाधिपम् ।
नेत्रबन्धं ततः कृत्वा वीरपट्टेन धीमता ॥ १९६ ॥

धन्यनागेति मन्त्रेण गुरुणा साभिमन्त्रितम् ।
धनुस्तस्मै प्रदातव्यं शरमप्यभिमन्त्रितम् ॥ १९७ ॥

काण्डात्काण्डादिति मन्त्रेणाचार्यश्च समर्पयेत् ।
समपादस्थशिष्यस्य बद्धाञ्जलिपुटस्य च ॥ १९८ ॥

उपनीतस्य शिष्यस्य संप्राप्तधनुषस्तथा ।
श्रमकर्मणि योग्यस्य श्रमप्राशस्त्व[स्त्य]मुच्यते ॥ १९९ ॥

उपदेशक्रिया यस्य श्रमो यस्य दिनेदिने ।
अस्य सिध्यन्ति नाराचाः सर्वकर्मसु ते क्षमाः ॥ २०० ॥

श्रमेण पुष्टिर्गात्राणां श्रमाल्लक्षः सुनिश्चितम् ।
श्रमेण शीघ्रसन्धानं श्रमा[द्वे]च्चेगः प्रवर्तते ।
श्रमेण दूरपातित्वं श्रमेण स्फोटय(ये)द्दृढम् ॥ २०१ ॥

श्रमेण कुरुते चित्रं श्रमेण तु करक्रिया ।
श्रमेण कर्कशश्चापः कृष्यते खलु लीलया ॥ २०२ ॥

श्रमेण रञ्जयेल्लोकान् श्रमेणोत्कर्षमाप्नुयात् ।
श्रमेण वर्म शत्रूणां लौहं भिन्द्याच्च तूलवत् ॥ २०३ ॥

श्रमाद्विजयते शत्रून् श्रमेण विजयो ध्रुवम् ।
नित्यं श्रमवशेनैव दुःसाध्यमपि साधयेत् ॥ २०४ ॥

श्रमेण तु शरीरस्य सौष्ठवं हि विजायते ।
श्रमेण जयमाप्नोति शत्रूणां मध्यसंस्थितः ॥ २०५ ॥

चित्रं विचित्रमायाति श्रमेणैव न संशयः ।
दुष्करं सुकरं चैव श्रमयोगात्प्रजायते ॥ २०६ ॥

किं प्रभूतं वदिष्यामो यद्यन्यत्किञ्चिदायुधम् ।
श्रमात्सिध्यति तत्सर्वं श्रमो यस्य स भार्गवः ॥ २०७ ॥

शृङ्गहीनो वृषो यद्वद्दन्तहीनो यथा गजः ।
गुणहीनं धनुस्तद्वच्छ्रमहीनश्च साधकः ॥ २०८ ॥

तस्मात्सदा श्रमं कुर्यात्प्रयत्नाद्गुरुसन्निधौ ।
गुरूणामनधिष्ठाने वृद्धोऽपि श्रममाचरन् ॥ २०९ ॥

दोषैराक्रम्यते यस्माद्यथा विद्वानपीन्द्रियैः ।
गुरुहीनश्च यः कश्चिच्छ्रमं कुर्यादहर्निशम् ।
कायक्लेशो भवेत्तस्य न किञ्चिदपि सिध्यति ॥ २१० ॥

श्रमा धनुषि यावन्तस्ते लक्षविषया यतः ।
धनुर्वेदोक्तमस्माभिः ततो लक्षं निरूप्यते ॥ २११ ॥

लक्षं चतुर्विधं ज्ञेयं स्थिरं चैव चलं तथा ।
चलाचलं द्वयचलं वेधनीयं क्रमेण तु ॥ २१२ ॥

आत्मानं सुस्थिरं कृत्वा लक्षं चैव स्थिरं ततः ।
वेधयेद्यश्च धानुष्कः स्थिरवेधः स उच्यते ।
चलं तु वेधयेद्यस्तु स्वयं तु स्थिरसंस्थितः ॥ २१३ ॥

चललक्षं तु तत्प्रोक्तमाचार्यैर्लक्ष्यकोविदैः ।
धानुष्को यत्र चलति लक्षं च स्थिरसंस्थितम् ॥ २१४ ॥

निपुणेनैव वेद्धव्यं तद्विज्ञेयं चलाचलम् ।
उभावेव चलौ यत्र लक्षं चापि धनुर्धरः ॥ २१५ ॥

तद्विज्ञेयं द्वयचलं श्रमेणैव हि सिध्यति ।
चतुर्विधमिदं लक्षमेकैकं द्विविधं मतम् ॥ २१६ ॥

कायश्च प्रतिकायश्च विशेषस्तत्र कुत्र(कथ्य)ते ।
गजवाजिनृणां काया रणे लक्ष्याणि मुख्य(?) च ॥ २१७ ॥

प्रतिकायाश्च लक्ष्याणि श्रमार्थं स्युर्विना रणात्(?) ।
लोमहीनं मांसहीनमार्द्रं शतगुणं भवेत् ॥ २१८ ॥

चर्म यद्दन्तिनस्तुल्यं तत्कायेन मतं बुधैः ।
तस्यार्धं प्रतिकायः स्याद्वाजिनः पुरुषस्य च ॥ २१९ ॥

प्रतिकायो भवेदर्धं तस्येत्याहुः कृतश्रमाः ।
चर्मतुल्यं च यन्मांसं कुर्यात्तदपि वेधने ॥ २२० ॥

प्रतिकायतया नागवाजिमानं च [मानुष] वर्ष्मणाम् ।
शिलायाद्य गुणोत्सेधाल्लोहपट्टश्च यो भवेत् ॥ २२१ ॥

सार्धाङ्गुलश्च तं भित्त्वा भिन्द्यात्कायं गजस्य च ।
चतुर्विंशति वर्माणि यो भिनत्ति गुणानरः ॥ २२२ ॥

तस्य बाणो गजेन्द्रस्य कायं निर्भिद्य गच्छति ।
शृङ्गं च माहिषं शस्त्रमलोहं लोहमध्यक(ग)म् ॥ २२३ ॥

उत्तमं मध्यमं चैव शृङ्गं वेध्यं यथाक्रमम् ।
कार्पासं वर्म चाभेद्यमङ्गुलैः पञ्चभिर्मतम् ।
करीषसिकताधान्यैः पूरितावाथ पद्धकी ॥ २२४ ॥

इत्येते हस्तिकायानां प्रतिकायाः प्रकीर्तिताः ।
चर्मवद्वर्मयेद्भागान् वाजिमानुषकाययोः ॥ २२५ ॥

गजवाजिनृणां कायं समानं कीलकं भुवि ।
आरोप्य तस्य शिरसि लक्षं चर्मादिनिर्मितम् ॥ २२६ ॥

बन्धी(ध्री)याच्चतुरश्रं तत्त्रिकोणं वृत्तमेव वा ।
समानमर्धचन्द्रेण स्याद्वा शुचिमुखं तथा ॥ २२७ ॥

लक्षं स्यात्त्रिविधं सर्वं स्थूलं सूक्ष्मं रहस्यकम् ।
स्थूलं चर्मादिलक्षं स्यात्सूक्ष्माद्यप्यभिधीयते ॥ २२८ ॥

शुद्धीयवश्च सिद्धार्थो वालाधारा च पञ्चमी ।
शब्दादीनि च लक्षाणि रहस्यानि विदुर्बुधाः ॥ २२९ ॥

उदिते भास्करे लक्षं पश्चिमायां निवेशयेत् ।
अपराह्णे च कर्तव्यं लक्ष्यं पूर्वदिशि स्थितम् ॥ २३० ॥

उत्तरेण सदा कार्यं प्रशस्तं मद्विरोधकम् ।
संग्रामेण विना कार्यं न लक्षं दक्षिणामुखम् ॥ २३१ ॥

संस्थाप्य लक्षं धानुष्को गुरोर्ज्ञात्वा यथाक्रमम् ।
दोषं गुणं शरीरस्थं वेधे यत्नं समाचरेत् ॥ २३२ ॥

दोषं गुणं च वक्ष्यामः शरीरस्थं यथाक्रमम् ।
तिष्ठतो लक्षवेधाय धानुष्कस्य यथाविधि ॥ २३३ ॥

दोषाणां च परित्यागात् गुणानां च परिग्रहात् ।
जायते लक्षसिद्धिस्तु तस्मात्तदभिधीयते ॥ २३४ ॥

अतिहर्षात्तथा दर्पान्मोहात्तद्वत्प्रमादतः ।
दुराचार्योपदेशाच्च वैषम्याद्देशकालयोः ॥ २३५ ॥

अतिवेगादसामर्थ्यादिन्द्रियाणामनिग्रहात् ।
श्रमाद्भयाच्च शोकाच्च तृषाद्या(व्या)यामयोगतः ॥ २३६ ॥

अतितृप्ते बुभुक्षायां कारणैरेवमादिभिः ।
जायन्ते बहवो दोषाः कायकर्मप्रदूषणाः ॥ २३७ ॥

न कुर्याद्धनुराकर्षं स्थानेन च विना क्वचित् ।
विना स्थानेन कर्षन् हि भवेल्लक्षाद्बहिः शरः ॥ २३८ ॥

तलेन पार्ष्ण्यङ्गुलिना यस्मादाक्रम्य धन्विना ।
स्थीयते लक्षभेदाय तस्मात्तत्स्थानमीरितम् ॥ २३९ ॥

व्यथितं कंपितं चण्डं स्तब्धं प्रचलितं तथा ।
विद्रुतं च क्षतै[षडे]वैते स्थानदोषाः प्रकीर्तिताः ॥ २४० ॥

यस्तु पद्भ्यां समं तिष्ठेदचलः पादपो यथा ।
सोऽतिवेगं प्रसहते धनुषो वा रथस्य वा ॥ २४१ ॥

भवन्ति यद्यपि स्थाया[ना]न्यनेकानि धनुष्मताम् ।
तथापि तेषां मुख्यानि कथ्यन्तेऽत्र समासतः ॥ २४२ ॥

समपादं च वैशाखं मण्डलालीढके तथा ।
प्रत्यालीढ[मि]मति ज्ञेयमवस्थानं च पञ्चकम् ॥ २४३ ॥

पादौ समौ समाङ्गुष्ठौ समजानुकसन्धिकौ ।
वितस्त्यन्तरितस्थानौ समपाद उदाहृतः ॥ २४४ ॥

पादौ सविस्तरौ कार्यौ समौ हस्तौ प्रमाणतः ।
विशाखस्थानकं ज्ञेयं कूटलक्षस्य वेधने ॥ २४५ ॥

मण्डलाकृतिकौ स्यातां पादौ यदि समस्थितौ ।
मण्डलस्थानकं तत्तु स्थानविद्भिरुदाहृतम् ।
अग्रतो वामपादं च दक्षिणं चापि कुञ्चितम् ॥ २४६ ॥

आलीढन्तु प्रकर्तव्यं हस्तद्वयसविस्तरम् ।
प्रत्यालीढं तु कर्तव्यं सव्यं चैवानुकुञ्चितम् ॥ २४७ ॥

दक्षिणं तु पुनस्तद्वद्दूरपाते विशिष्यते ।
यःस्थितः स्थानकेष्वेव सर्वज्ञोऽसौ धनुर्धरः ॥ २४८ ॥

स प्रहर्ता भवेद्दग्धं(लक्ष्यं) पत्यश्वरथहस्तिषु ।
अग्रपादस्थितं कौव्यं (?) पार्ष्ण्योर्वाप्यवपीडनम् ॥ २४९ ॥

पार्श्वाभ्यां चलनं चैव ताभ्यां चाप्यवपीडनम् ।
तदपूर्णमथाभीक्ष्णं तथैवाप्यपसर्पणम् ॥ २५० ॥

अस्थिराङ्गुलिता चैव कुण्ठि(ञ्चि)ताङ्गुलिता तथा ।
इत्येते कीर्तिता दोषा नव पादसमुद्भवाः ॥ २५१ ॥

एषां विपर्यया ये च ते गुणाः परिकीर्तिताः ।
शैथिल्यमतिगाढत्वमतिबुद्धिः प्रलंबता ॥ २५२ ॥

दोषाश्चत्वार उद्दिष्टाः सन्धाने श्रोणिशाखयोः ।
करकस्तम्भसदृशा कटी या सुप्रतिष्ठिता ।
तामेव च प्रशंसन्ति चतुरश्रां मृदुस्थिराम् ॥ २५३ ॥

लम्बोदरत्वं भुग्नत्वं [कु]कक्षिदोषौ प्रकीर्तितौ ।
एतयोरन्यथात्वं च गुणः कुक्षेः प्रकीर्तितः ॥ २५४ ॥

भुजयोः कंपनं दोषो निष्कम्पत्वं गुणो महान् ।
मुष्टेर्दोषान् गुणांश्चैव वक्ष्यामस्तत्प्रपञ्चने ॥ २५५ ॥

कण्ठोष्ठयोर्बहिर्भावाद्बहिर्भावो धनुर्भृताम् ।
उ[भ]मेतां दोषगुणज्ञा[का] विति शास्त्रविदां मतम् ॥ २५६ ॥

मुख्य[ख]स्य पाटनं दोषः तस्य संकोचनं तथा ।
निमीलनाकुञ्चने च तथोन्मेषनिमेषणे ॥ २५७ ॥

दोषमाहुर्वैपरीत्यं शराग्रालोकनं गुणः ।
द्वौ दोषौ च ललाटस्य कौटिल्यं भ्रुकुटी तथा ॥ २५८ ॥

पुरस्तात्पृष्ठतश्चैव तिर्यक्त्वं वक्रता भ्रमः ।
अत्युन्नतत्वं नीचत्वं कम्पनोत्तानने तथा ॥ २५९ ॥

दोषाः स्युः शिरसस्तस्य वैपरीत्यं गुणो मतः ।
यः शरीरगतैर्दोषैः सर्वेरेतैर्विवर्जितः ।
स भवे[द्रा]गवेणापि समश्शरविमोक्षणे ॥ २६० ॥

धनुस्स्पर्शे गुणस्पर्शे गुणो दोषश्च यत्र यः ।
तमिहाचक्ष्महे पूर्वं क्रमप्राप्तं धनुर्भृताम् ॥ २६१ ॥

त्वचां चैवातिमन्दत्वं धनुषश्चालनं तथा ।
अत्यूर्ध्वं पृष्ठतस्तद्वत्पुरस्ताच्चालनं तथा ॥ २६२ ॥

अपृष्ठचालनं चापि भूयःकम्पनमस्य च ।
पार्श्वे चाम[क]र्षणं पृष्ठप्रदेशग्रहणं तथा ॥ २६३ ॥

दोषा एकादशैवात्र धनुःस्पर्शे प्रकीर्तिताः ।
वैपरीत्यं गुणस्तेषां सौष्ठवं तस्य तद्विदुः ॥ २६४ ॥

अधिगत्वं स्वल्पगत्वं वक्रत्वं स्तब्धता तथा ।
पक्षयोश्चैव बाह्वोश्च स्तब्धता चलनं तथा ॥ २६५ ॥

अंसयोरुन्नतिश्चेति दोषाः प्रोक्ता गुणग्रहे ।
एषां तु विपरीता ये क्रियाज्ञैस्ते प्रपूजिताः ॥ २६६ ॥

धनुस्स्पर्शे गुणस्पर्शे चोभयत्र मनीषिणः ।
दाढर्यमाहुर्गुणं तस्य लक्षणन्त्वभिधीयते ।
दाढर्येन ग्रहणं यच्च चापस्य च गुणस्य च ॥ २६७ ॥

तत्पूर्वापरयोर्दाढ्यमामनन्ति मनीषिणः ।
पञ्चपञ्चविधे मुष्टिद्वये चापगुणाश्रिते ॥ २६८ ॥

पञ्चव्याधा(या)न्प्रवक्ष्यामः क्रमप्राप्तान् यथाक्रमम् ।
प्रमण्डलस्समधृतः तृतीयो धनुराश्रयः ॥ २६९ ॥

तुङ्गस्तथोपतुङ्गश्च पञ्च स्युः चापमुष्टयः ।
ऊर्ध्वस्थिताङ्गुष्ठमूले तृतीयांशे धनुःस्थितम् ॥ २७० ॥

शेषाङ्गुलिधृतं यत्र सा मुष्टिः स्यात्प्रमण्डलः ।
मध्यमानामिके यस्मिन्नङ्गुष्ठेन निपीडिते ॥ २७१ ॥

अङ्गुलीभिर्धृते चापे सर्वाभिः समधारितः ।
अङ्गुष्ठं शिथिलीकृत्य चतुर्भिर्दृढमण्डलैः ॥ २७२ ॥

पीडयित्वा धनुस्तिर्यङ्मुष्टिः स्याद्धनुराश्रयः ।
यस्मिन् प्रदेशिनीवर्जैश्चतुर्भिर्धृतमण्डलैः ॥ २७३ ॥

पीडयेच्च धनुर्मुष्टिः स तुङ्ग इति कीर्तितः ।
प्रदेशिनीमध्यमिके यस्मिन्नङ्गुष्ठपीडिते ।
उपतुङ्गस्स यत्रैव कनिष्ठानामिके श्लथे ॥ २७४ ॥

प्रमण्डलो दूरपाते लक्षे स्यात्समधारितः ।
अतीव कठिना कु(मु)ष्टिः स्यान्मुष्टेर्धनुराश्रयात् ॥ २७५ ॥

तुङ्गे च लघुसन्धानमुपतुङ्गेऽर्धकर्षणम् ।
दृढदुष्करचित्राढ्यान्यन्यान्यप्यूह्य कारयेत् ॥ २७६ ॥

पताका वज्रमुष्टिश्च सिंहकर्णी तथैव च ।
मुसरी काकतुण्डी च योजनीया यथाक्रमम् ॥ २७७ ॥

दीर्घा तु तर्जनी यत्र संश्रिताङ्गुष्ठमूलकम् ।
पताका सा च विज्ञेया नलिका दूरमोक्षणे ॥ २७८ ॥

तर्जनी मध्यमामध्यमङ्गुष्ठश्च विशेद्यदि ।
वज्रमुष्टिश्च सा ज्ञेया स्थूले नाराचमोक्षणे ॥ २७९ ॥

प्रदेशिनीमध्यमानामिकाभिर्गुणकर्षणम् ।
प्रदेशिनीमध्यमयोर्मध्ये शरनिवेशनम् ॥ २८० ॥

कनिष्ठाङ्गुष्ठयोर्सिंहकर्णवद्यत्र संस्थितिः ।
सिंहकर्णा तु सा ज्ञेया मुष्टिः शरविमोक्षणे ।
अङ्गुष्ठनखमध्ये तु तर्जन्यग्रन्तु संस्थितम् ॥ २८१ ॥

मुत्स(स)री सा च विज्ञेया चित्रलक्षस्य वेधने ।
अङ्गुष्ठेन समाकृष्य गुणमङ्गुष्ठकोपरि ॥ २८२ ॥

शरं निवेश्य तत्रापि प्रदेशिन्यग्ररोपणम् ।
मध्यमां तु समारोप्याङ्गुष्ठाग्रेऽनामिकां तथा ॥ २८३ ॥

कनिष्ठां च परीहाय मुष्टिः स्यात्काकतुण्डिका ।
कैशिकः पार्षतश्चैव भरतच्छन्द एव च ॥ २८४ ॥

सात्विकश्चेति निर्दिष्टाः पञ्चच्छायाः समासतः ।
आकर्षणं केशमूलपर्यन्तं कैशिकं स्मृतम् ॥ २८५ ॥

यत्कर्णविवरस्पर्शे तच्च पार्षतनामकम् ।
यद्ग्रीवामध्यपर्यन्तं त(च्च)स्य भरतनामकम् ॥ २८६ ॥

स्यादंसदेशपर्यन्तकर्षणं च्छन्दसंज्ञकम् ।
नयनप्रान्तपर्यन्तकर्षणं सात्विकं स्मृतम् ॥ २८७ ॥

कैशिकश्चित्रवेधस्स्यादित्याहुश्च कृतश्रमाः ।
पार्थश्च समो ज्ञेयो भरतो दृढवेधने ॥ २८८ ॥

दृढवेधे च दूरे च छन्दनामानमादिशेत् ।
अधोलक्ष्यस्य वेधे च सात्त्विकञ्च समादिशेत् ॥ २८९ ॥

सन्धानक्षेत्रमप्राप्तेः पञ्चध्यायेषु सात्त्विकः ।
इत्युपायास्समासेन लक्ष्यसंसिद्धिहेतवः ॥ २९० ॥

तस्मात्तानि निरूप्यन्ते लक्ष्यसिद्धौ यथाक्रमम् ।
धानुष्कस्य प्रयत्ना हि लक्ष्यसिद्धौ व्यवस्थिताः ॥ २९१ ॥

आधानमथ सन्धानं मुष्टिकर्मविकर्षणम् ।
अवस्थापनमोक्षाणां समुदायः क्रियोच्यते ॥ २९२ ॥

अङ्गुलीभिर्विभज्यैकं तूर्णीरादग्रहणं तु यत् ।
शरस्य स्यात्तदा(दा)धानं पूर्वाचार्यैरुदाहृतम् ॥ २९३ ॥

गुणकार्मुकबाणानां त्रयाणामवियोगतः ।
सन्धिर्भवति वै यस्मात्तस्मात्सन्धानमुच्यते ॥ २९४ ॥

स्कन्धकर्णद्वयोर्मध्ये सन्धानक्षेत्रमादिशेत् ।
सन्धानं यो न जानाति वृ[था]था तस्य परिश्रमः ॥ २९५ ॥

पूर्वपश्चिमयोर्मुष्ट्योः यत्कर्म च धनुर्धरैः ।
क्रियते च यथायोगं मुष्टिकर्म तदुच्यते ॥ २९६ ॥

आलोकयन[न्] शरस्याग्रं लक्षञ्चापि धनुश्च यत् ।
विकृष्य(विलोक्य)ते यथान्यायं तद्वत्कर्षणमुच्यते ॥ २९७ ॥

आकृष्टस्य गुणस्याथ शरेण सहितस्य यत् ।
अवस्थानं कर्णदेशे स्यादवस्थापनन्तु तत् ॥ २९८ ॥

मोक्षणं नाम तत्प्रोक्तं गुणाद्बाणविरेचनम् ।
सा दीप्तपावके चैव पूर्णाहुतिरिवार्पितम् ॥ २९९ ॥

पूरके पूरयेद्बाणं कुम्भके धारयेत्क्षणम् ।
रेचके मोचयेच्चैव खगः सिद्धिं परां व्रजेत् ॥ ३०० ॥

पूरणं यत्र हीनं स्याद्धारणं मोक्षणं तथा ।
अकाले मोक्षणे चैव दोषः संपद्यते महान् ॥ ३०१ ॥

एवञ्च यो न शक्नोति पूरकादियथाक्रमम् ।
शिथिलत्वाच्च गात्रस्य वेधनं चादृढं भवेत् ॥ ३०२ ॥

योगचिन्तामणावुक्तं विशेषेण तु लक्षणम् ।
अस्माभिः पूरकादीनां तस्मादत्र न कथ्यते ॥ ३०३ ॥

पूर्वयोगं यदा वायुः पश्चादाकृष्यते धनुः ।
तदा गात्रञ्च बाणश्च शिरश्चापि प्रकम्पते ॥ ३०४ ॥

आभ्यन्तरञ्च बाह्यञ्च सौष्ठवं द्विविधं भवेत् ।
आभ्यन्तरं मनश्शान्तः सत्यपि क्षो[द]भकारणे ॥ ३०५ ॥

स्थूलानामथ बाल्पानां शोभा यत्रोपजायते ।
अङ्गानां सौष्ठवं तद्धि बाह्यं शास्त्रविदो विदुः ॥ ३०६ ॥

यच्चाशिथिलतां धत्ते सर्वेष्वङ्गेष्वभङ्गुराम् ।
चापाचार्यैस्तदाम्नातं प्रकृष्टमिह सौष्ठवम् ॥ ३०७ ॥

पादौ स्थानमितौ यस्य त्रिकं नम्रं सुशोभनम् ।
अकुब्जौ च समौ पार्श्वौ दृष्टिर्लक्षनिवेशिनी ॥ ३०८ ॥

ऋजुः कायोभवेद्यस्य धानुष्कं सौष्ठवं च सः ।
लोकानुरञ्जनी शोभा यस्य स्याद्बाणपूरणे ॥ ३०९ ॥

अनायासात्सहन्त्येव गजवाजिनरान् बहून् ।
सौष्ठवाद् दृश्यते वेधो वेधादेव हि सौष्ठवम् ॥ ३१० ॥

सौष्ठवेनोपपन्ने तु वेधनं हि प्रशस्यते ।
अङ्गसौष्ठवविभ्रष्टाः क्रियायोगविवर्जिताः ॥ ३११ ॥

लक्षशो लक्षवेद्धारो म्लेच्छतुल्या भवन्ति हि ।
शास्त्रोक्तेन प्रमाणेन बाणक्षेपः पुनःपुनः ॥ ३१२ ॥

गुरुप्र(रूप)देशात्क्रियते सोऽभ्यास इति कथ्यते ।
न हि वेधस्य सिद्धिस्तु वचनादेव जायते ॥ ३१३ ॥

अभ्यासादुपदेशाच्च वेधे सिद्धिस्तु जायते ।
तिसृभिश्चाङ्गुलीभिस्तु अङ्गुष्ठेन ततस्समम् ॥ ३१४ ॥

अव[क्रम]क्रिमिणिबन्धेन सुस्थिरेण दृढेन च ।
दोषैस्समस्तैस्तत्ते[स्त्यक्ते]न कम्पशैथिल्यकादिभिः ॥ ३१५ ॥

विवर्जितेन यो मोक्षः स व्यवच्छेद उच्यते ।
पूर्वमुष्टिप्रकोष्ठस्य किञ्चिदाकुञ्चनं हि तत् ॥ ३१६ ॥

दृढं गृहीतचापस्य स कल्माष इति स्मृतिः ।
चक्षुषा मनसा बुद्धया शराग्रेण च मुष्टिना ॥ ३१७ ॥

ग्रहणं यत्तु लक्षस्य निमित्तग्रहणं स्मृतम् ।
मनोनयनबाणाग्रलक्षणन्तु पयत्नतः ॥ ३१८ ॥

यत्सम्यगेकीकरणं सा भवेदेकताकृतिः ।
लाघवं गतिशुद्धिश्च लक्षस्यापि च वेधनम् ॥ ३१९ ॥

सम्यङ्निष्पन्नरूपायाः क्रिया [याः] स्यात्फलत्रयम् ।
अलक्षितशरादानसन्धानोत्कर्षमोक्षणम् ॥ ३२० ॥

यल्लक्षवेधनं तज्ज्ञास्तदाहु[र्ग]तिलाघवम् ।
शीघ्रगा मन्दगा चैव भ्रामिका मत्स्यपुच्छिका ॥ ३२१ ॥

कम्पा गोमूत्रिका च स्यादधोव[क्त्रो]र्ध्वोर्ध्ववक्त्रिका ।
चित्रविभ्रमिका चैव शुद्धा च गतयो दश ॥ ३२२ ॥

ईषत्यक्ताश्च नाराचाः मन्दाक्रान्ताश्च मुष्टिका ।
हुंकृत्वा विप्लुतिं यान्ति सा शीघ्रा गतिरुच्यते ॥ ३२३ ॥

श्रमहीनो यदा धन्वी विकर्षेत्कठिनं ध[नुः]नम् ।
तदा भ्रमन्ति नाराचाः सा गतिर्भ्रामिका स्मृता ॥ ३२४ ॥

पत्रहीनाश्च नाराचाः क्रियाहीनाश्च धन्विनः ।
मत्स्यपुच्छाकृतिर्याति मत्स्यपुच्छा गतिर्भवेत् ॥ ३२५ ॥

पुङ्खमध्ये गुणी यत्र पीड्यते धन्विना क्वचित् ।
कम्पते तेन नाराचो गतिः कम्पेत्युदाहृता ॥ ३२६ ॥

विकर्षे कम्पते बाहुः क्रियाकण्टेन कारयेत् ।
स[र्पस्ये]वस्यैव गतिर्या सां(सा) गोमूत्र(ा)गतिरुच्यते ॥ ३२७ ॥

ऊर्ध्वमुष्टिर्भवेच्चापो गुणमुष्टिरधो भवेत् ।
सा शुद्धा मार्गणो लक्ष्यादूर्ध्वं याति न संशयः ॥ ३२८ ॥

मोक्षणे चैव बाणस्य चापमुष्टिरधो भवेत् ।
गुणमुष्टि[र्भ]भवेदूर्ध्वं तदाधोगामिनी गतिः ॥ ३२९ ॥

कायो भ्रमति चित्तञ्च शरसन्धानतो यदि ।
तामसी सा गतिर्ज्ञेया भ्रमिका चित्रविभ्रमा ॥ ३३० ॥

दोषैरेतैर्विहीना च समस्तैर्या गतिर्भवेत् ।
सा शुद्धा दशमी ज्ञेया गतीनामुत्तमा हि सा ॥ ३३१ ॥

निश्शब्दा चैव निष्कम्पा गुटिकाकारधारिणी ।
आपुङ्खाद्धरणीं याति सा शुद्धा दशमी गतिः ॥ ३३२ ॥

अनिष्कम्पाङ्गमुष्टेश्च लक्षं प्रतिशरो यथा[दा] ।
कुपितोरगवद्याति सा शुद्धा दशमी गतिः ॥ ३३३ ॥

यु[क्षु]धितो वै यथा श्येनः कपोतं हन्ति वेगतः ।
तथा खगगतिर्लक्ष्ये दशमी स्यान्मतं हि नः ॥ ३३४ ॥

वरं प्राणाधिको धन्वी न तु प्राणाधिकं धनुः ।
धनुषा पीड्यमानस्तु धन्वि[न्वी]लक्षं न पश्यति ॥ ३३५ ॥

पुष्पव[व]द्धारयेद्बाणं सर्पवत्पीडयेद्धनुः ।
धनवच्चि[न्त]तयेल्लक्षमित्याचार्याः प्रचक्षते ॥ ३३६ ॥

शत्रुवच्चिन्तयेल्लक्षं खड्गवद्धारयेद्धनुः ।
वह्निवद्धिभृयाद्बाणं बेधसिद्धौ मतं हि नः ॥ ३३७ ॥

बलवत्कार्मुके शक्तः स्थूललक्ष्यस्त्वनिन्दितः ।
कृशोऽपि लाघवोपेतः सूक्ष्मवेधी प्रशस्यते ॥ ॥ ३३८ ॥

मर्मज्ञः सूक्ष्मवेधी च सद्यः प्राणहरो नरः ।
स[ए]कोऽपि समरे शक्तः कर्तुं नरपतेःश्रियम् ॥ ३३९ ॥

देहे भिन्नेऽपि बाणौघैः देही देहं न मुञ्चति ।
हते मर्मणि जन्तुस्तु सद्यःप्राणान्विमुञ्चति ॥ ३४० ॥

कुम्भं स्थूलं गजानां स्याद्वाजिनां कर्णपृष्ठतः ।
नराणां हृदयं मर्म त्वेवं मर्मविदो विदुः ॥ ३४१ ॥

मर्मस्था[ना]न्यानि चान्यानि ज्ञातव्यानि समन्ततः ।
गुरूपदेशमार्गेण गुरुभक्तिपरायणैः ॥ ३४२ ॥

महाबलो मर्मवेधी बलवत्कार्मुकान्वितः ।
सौष्ठवादिगुणैर्युक्तो भवेत्पार्थ इवापरः ॥ ३४३ ॥

अतःपरं प्रवक्ष्यामः श्रमस्य विधिमेव च ।
यादृशञ्च श्रमं कुर्याद्धनुर्वेदविधानतः ॥ ३४४ ॥

प्रथमं चापमारोप्य चुलिकां बन्धयेत्ततः ।
स्थानकन्तु ततः कृत्वा सन्धानन्तु ततःपरम् ॥ ३४५ ॥

शश्वदाकृष्य शा(चा)पेन भूमिवेधञ्च कारयेत् ।
नमस्कृत्य शिवं विघ्नराजं गुरुधनुश्शरान् ॥ ३४६ ॥

प्रथमं यौगिकं चापं गृहीत्वा वामपाणिना ।
विकर्षयेत्कैशिकेन कल्माषञ्चैव कारयेत् ॥ ३४७ ॥

निष्कम्पञ्च भुजं कृत्वा पूरयेदुदरं पुनः ।
चक्षुषी स्पन्दयन्नैव दृष्टिं लक्षे निवेशयेत् ॥ ३४८ ॥

शलाकां पातयेद्यस्तु भार्गवैस्सं[स]प्रशंसितः ।
तच्छलाकाश्रमं कुर्याद्यावत्स्याद्विजितश्श्रमः ॥ ३४९ ॥

शनैःशनैः श्रमं कुर्यादुभे सन्ध्ये विचक्षणः ।
शलाकापातने चैव कूटलक्ष्यञ्च सिद्धयति ॥ ३५० ॥

कूटे सिद्धे त्रयः सिद्धाः पातो घातश्च लाघवम् ।
तस्य चापक्रियासिद्धिरचिरादेव जायते ॥ ३५१ ॥

वामहस्तेन संविद्धे(ध्ये)त्पश्चाद्दक्षिणमाचरेत् ।
उभाभ्याञ्च श्रमं कुर्यात् नाराचैरिषुभिस्तथा ॥ ३५२ ॥

सम्यगाधा(दा)य वेद्धव्यं शरैःशतसहस्रशः ।
विधेयस्तावदभ्यासो यावल्लक्षं प्रसिद्ध्यति ॥ ३५३ ॥

चतुश्शतैश्च काण्डानां यो हि लक्षं विसर्जयेत् ।
सूर्योदयं चास्तमने(ये) स ज्येष्ठो धन्विनां मतः ॥ ३५४ ॥

यस्तु सूर्योदयेऽस्ते च लक्षं पञ्चशतान् शरान् ।
विध्येद्धानुष्कमध्ये स श्रेष्ठस्स्यादिति नो मतम् ॥ ३५५ ॥

त्रिशतैर्मध्यमश्चैव द्विशताभ्यां कनिष्ठकः ।
ऊर्ध्ववेद्धा भवेज्ज्येष्ठो नाभिवेद्धा च मध्यमः ॥ ३५६ ॥

पादवेद्धा कनिष्ठस्स्यादिति ब्रूमो वयं पुनः ।
रथस्थेन गजस्थेन हयस्थेन च पत्तिना ॥ ३५७ ॥

धावतो[ता] वै श्रमः कार्यो लक्षं हन्तुं सुनिश्चितम् ।
चापत्रयप्रमाणायां भूमौ लक्ष्यं स्थितं पुरः ॥ ३५८ ॥

विध्येद्भूमिविवृद्धिश्च क्रमात्स्यात्तदिहोच्यते ।
श्रमवृद्धौ भवेद्वृद्धिः बलस्य हि धनुर्भृताम् ॥ ३५९ ॥

बलवृद्धौ क्रमेण स्यात् प्राणाधिकधनुर्ग्रहः ।
यावत्प्राणाधिकं धन्वी धनुः कर्षति लीलया ॥ ३६० ॥

तावतीं विद्धयेद्भूमिं ततस्स्याद्दूरवेधिता ।
इत्थं कृतश्रमस्याथ धानुष्कस्य यथाविधि ॥ ३६१ ॥

शरच्छेदा विदुस्साध्यं यथा स्याल्लिख्यते तथा ।
संमुखं वा समायान्तं तिर्यगायान्तमम्बरे ॥ ३६२ ॥

शरं शरेण यश्छि[न्द्या]न्नाद्बाणच्छेदी स जायते ।
काष्ठगोलद्वयं क्षिप्तं दूरमूर्ध्वं पुरःस्थितम् ॥ ३६३ ॥

असंप्राप्तं धरापृष्ठे तद्गोपुच्छमुखेन च ।
यो हन्ति शरयुग्मेन शीघ्रसन्धानयोगतः ॥ ३६४ ॥

स स्याद्धनुर्भृतां श्रेष्ठः पूजितः सर्वपार्थिवैः ।
युगे यस्मिन्यत्प्रमाणो मनुष्योऽष्टगुणस्ततः ॥ ३६५ ॥

स्तम्भः कार्यस्तदुपरि सृष्टिसंहाररूपकम् ।
सव्यापसव्यक्रमणो[शो] भ्राम्यचक्रद्वयं यथा ॥ ३६६ ॥

कुर्यात्तस्योपरि तथा काष्ठकच्छपिकां पुनः ।
तस्याश्च वामनेत्रस्य भवेद्या च कनीनिका ॥ ३६७ ॥

तस्यां च तिलकं कुर्याद्वेधस्तम्भद्वयं भवेत् ।
स्तम्भस्याधस्तथा कुर्यान्निर्मलं घृतकुम्भकम् ॥ ३६८ ॥

ईषदङ्गारसन्तप्यमानं तस्य समीपतः ।
वैशाखस्थानमालम्ब्य सुनिश्चलमनस्तनुः ॥ ३६९ ॥

अधोमुखोऽन्तरालेन चक्रयोः घृतमध्यतः ।
कनीनिकां समालोक्य प्रतिबिम्बितरूपिणीम् ॥ ३७० ॥

सूचीमुखेन बाणेन विद्धयेत्तां धन्विनां वरः ।
राधाचक्राभिधानस्य यन्त्रस्येमं विभेदने ॥ ३७१ ॥

विधिमाहुर्विधानज्ञाः धनुश्शास्त्रविशारदाः ।
द्रोणाचार्यमते नूनं नास्त्यशक्यं महीतले ॥ ३७२ ॥

हेलया विध्यते सर्वं किमभ्यासस्य दुष्करम् ।
लक्ष्यस्थाने न्यसेत्कांस्यपात्रं हस्तद्वयान्तरम् ॥ ३७३ ॥

ताडयेच्छर्कराभिस्तु शब्दस्सञ्जायते यथा ।
यत्रैवोत्पद्यते शब्दः तच्च सम्यग्विचिन्तयेत् ॥ ३७४ ॥

श्रोत्रेन्द्रियसमायोगात् लक्ष्यं निश्चलतां नयेत् ।
पुनः शर्करया तच्च ताडयेच्छब्दहेतवे ॥ ३७५ ॥

ततो बाणेन हन्यात्तदवधानेन तीक्ष्णधीः ।
तमिस्रायां तमिस्रे तु वंशमारोप्य मुद्रिकाम् ॥ ३७६ ॥

तस्मिन् वध्या ससूत्रान्तु लम्बयेत्तत्र घण्टिकाम्(नाम्) ।
अन्यः खगविमार्गस्थः सूत्रं स्पृष्ट्वात्र वादयेत् ॥ ३७७ ॥

तां सत्याः शब्दमाकर्ण्य तां विध्येदिति नो मतम् ।
हस्तसङ्ख्यां क्रमेणाथ दूरवेधाय वर्धयेत् ॥ ३७८ ॥

एतच्च दुष्करं कर्म भाग्यैः कस्यापि सिद्ध्यति ।
मनोमात्रस्य विषये यल्लक्ष्यं तस्य वेधनम् ॥ ३७९ ॥

मनोवेध इति प्रोक्तं चापाचार्यैः कृतश्रमैः ।
देवतायाः प्रसादेन मनोवेधः प्रजायते ॥ ३८० ॥

अन्यथा न हि सिद्धिस्स्यादित्याचार्याः प्रचक्षते ।
गुरुभक्तिबलेनैव मनोवेधस्तु सिद्ध्यति ॥ ३८१ ॥

यथैकलव्यधशा[व्यः श]स्त्रास्त्र[स्त्रे] प्रसिद्धोऽभून्मतं हि नः ।
शस्त्रसाध्योऽस्त्रसाध्यो वा मनोवेधस्तु सर्वदा ॥ ३८२ ॥

देवतायाः प्रसादात्तु गुरुभक्तिर्विशिष्यते ।
**तन्त्रचिन्तामणा**वुक्तं शिवादप्यधिको गुरुः ॥ ३८३ ॥

मनोवेधविधौ धन्वी त्रिषु लोकेषु दुर्लभः ।
देवतास्तं प्रशंसन्ति मर्त्यलोकेषु का कथा ॥ ३८४ ॥

वक्ष्यन्ते खड्गकट्टारप्रभृतीनि यथाक्रमम् ।
धनुषोऽङ्गानि चान्यानि शस्त्राणि समरे यतः ॥ ३८५ ॥

पञ्चाशदङ्गुलः खड्गश्चत्वारिंशस्तथा स्मृतः ।
पञ्चविंशाङ्गुलश्चैव यथायोग्यं च संमतः ॥ ३८६ ॥

गोजिह्वासदृशः खड्गो नीलोत्पलदलप्रभः ।
करीरपत्रसङ्काशो वंशच्छदनिभः शुभः ॥ ३८७ ॥

सूर्यमण्डलचन्द्रार्धकुण्डलाम्भोरुहाकृतिः ।
शिवलिङ्गस्वस्तिकयोः श्रीतरोः सदृशस्तथा ॥ ३८८ ॥

दृश्यते येषु चिह्नं हि ते खड्गाः शुभदा मताः ।
क्रव्यादकङ्कसरटकाकानां वृश्चिकस्य च ॥ ३८९ ॥

लक्ष्माणि येषु दृश्यन्ते ते खड्गास्त्वशुभप्रदाः ।
ह्रस्वस्फुटितकुण्डाद्याः खड्गा येऽन्येऽपि दूषिताः ॥ ३९० ॥

(शिवलिङ्गस्वस्तिकयोः) [इदं प्रामादिकम्]
तेऽनिष्टफलदास्तस्माद्वर्जनीयाः प्रयत्नतः ।
कट्टारच्छुरिके ज्ञेये प्रसिद्धे लोकतस्तु ते ॥ ३९१ ॥

शुभाशुभप्रदं चिह्नं ज्ञातव्यं खड्गवत्तयोः ।
फलकं द्विविधं ज्ञेयं दीर्घं वा वृत्तमेव वा ॥ ३९२ ॥

षोडशाङ्गुलविस्तारं त्रिंशदङ्गुलदीर्घकम् ।
दीर्घं कार्यं वर्तुलं च सर्वतः षोडशाङ्गुलम् ॥ ३९३ ॥

अनुरूपाच्च योद्धृणामथ वा मानमिष्यते ।
कुन्तस्स्याद्दशतालस्तु भिन्दिपालस्तथैव च ॥ ३९४ ॥

शूलशक्तिशतघ्न्यस्स्युरष्टतालाः सशल्यकाः ।
तोमरोऽप्यष्टतालस्स्यान्मुसलं पञ्चतालकम् ॥ ३९५ ॥

चतुस्ताला गदा कार्या वज्रं चापि तथाविधम् ।
त्रितालं मुद्गरं विंशत्यङ्गुलो हेममण्डकः ॥ ३९६ ॥

अष्टारं द्वादशारं वा चक्रं स्याद्द्वादशाङ्गुलम् ।
खड्गादीनां च विज्ञेयं शस्त्राचार्योपदेशतः ॥ ३९७ ॥

योनिद्रव्यं तथा शिक्षा श्रमो बहुविधस्तथा ।
यन्त्रं बहुविधं ज्ञेयं प्रबलारिविमर्दनम् ॥ ३९८ ॥

दुर्गयुद्धे पुरोयुद्धे कूटयुद्धेऽपि तत्क्षमम् ।
प्रक्षेप्याङ्गुलिकार्दीश्च दृढसन्धारणक्षमान् ।
स्थौल्यं दैर्घ्यञ्च यन्त्रस्य विज्ञेयमुपदेशतः ॥ ३९९ ॥

इति श्रीमन्महाराजाधिराजगजपतिप्रतापरुद्रदेवस्वहस्तधारितकनककेसरिचतुष्टयावेष्टित-
शातकुम्भमयकुम्भसंभृतमेघडंबराभिधानसितातपत्रशोभमानकविपुङ्गव-
पण्डितराजराजगुरुवाजपेययाजिमन्त्रिवरगोदावरमिश्रविरचिते
हरिहरचतुरङ्गे पञ्चमो धनुर्विद्यापरिच्छेदः ॥

## ॥ अथ षष्ठो नीतिपरिच्छेदः ॥



नीतिमार्गानुसारेण युध्यमानो युधिष्ठिरः ।
नीतिवित्तं धार्तराष्ट्रं जित्वा राज्यमवाप्तवान् ॥ १ ॥

अन्वयव्यतिरेकाभ्यामुपयोगितया मतम् ।
नीतिशास्त्रं तदर्थोतः संक्षेपेण प्रदर्श्यते ॥ २ ॥

नीतेर्मन्त्रविधानत्वात् प्रथमं संप्रदर्श्यते ।
ऋते मन्त्रं हि कुर्वाणः स्वामी युद्धे विनश्यति ॥ ३ ॥

मन्त्रज्ञो मन्त्रयेत्स्वामी मन्त्रिभिर्मन्त्रकोविदैः ।
मन्त्रार्थकुशलो यस्मात्सुखं भूतीः समश्नुते ॥ ४ ॥

नृपोमन्त्रबलादेव दद्यान्मूर्ध्नि रिपोः पदम् ।
मन्त्रहीनस्तु नृपतिः नीचैरप्य[भि]रिभूयते ॥ ५ ॥

दुर्मन्त्रमेरं[नं] रिपवो यातुधाना इव क्रूत(क्रतु)म् ।
समन्ततो विलुम्पन्ति तस्मान्मन्त्रपरो भवेत् ॥ ६ ॥

अज्ञातज्ञानविज्ञातनिश्चयौ संशयच्छिदा ।
एके(क)देशेन सर्वस्य ज्ञानं मन्त्रबलाद्भवेत् ॥ ७ ॥

मन्त्रयेन्नेह कार्याणि नानाप्तेनाविपश्चिता ।
आप्तं मूर्खमनाप्तं चापण्डितं परिवर्जयेत् ॥ ८ ॥

निर्वाते निर्जने देशे नानावरणवर्जिते ।
निरुद्विग्नो महीपालो मन्त्रिभिस्सह मन्त्रयेत् ॥ ९ ॥

निस्तम्भे निर्गवाक्षे च निर्भित्यन्तरसंश्रये ।
प्रासादाग्रेऽप्यरण्ये वा मन्त्रयेन्मन्त्रवित्तमः ॥ १० ॥

संरक्षेन्मन्त्रबीजन्तु तद्गुर्व्यं हि महीभुजाम् ।
यस्मिन् भिन्ने ध्रुवं भेदो गुप्ते गुप्तिरनुत्तमा ॥ ११ ॥

मन्त्रबीजं यथा तन्त्रे गुप्तं शीघ्रफलप्रदम् ।
मन्त्रबीजं तथा नीतौ गुप्तं शीघ्रफलप्रदम् ॥ १२ ॥

शश्वदावर्तयेन्मन्त्रं धारयेद्यत्नतो ध्रुवम् ।
अप्रयत्नधृतो मन्त्रः प्रचरन्नग्निवद्दहेत् ॥ १३ ॥

मदः प्रमादः कामश्च सुप्तप्रलपितानि च ।
भिन्दन्ति मन्त्र[न्त्रं]प्रच्छन्नाः कामिन्यो[यौवतं]वता [य]तथा ॥ १४ ॥

विदुषां शासने तिष्ठन्नावमन्येत कञ्चन ।
सर्वस्यैवोपशृणुयात्सुभाषितजिघृक्षया ॥ १५ ॥

मदोन्मत्तः क्रियामूढो योऽतिक्रामति मन्त्रिताम् ।
अचिरात्तं वृधाः[था] मन्त्रमतिक्रामन्ति विद्विषः ॥ १६ ॥

द्वादशेति मनुः प्राह षोद[ड]शेति बृहस्पतिः ।
उशना विंशतिरिति मन्त्रिणा मन्त्रिमण्डलम् ॥ १७ ॥

यथासंभवमस्माभिरुच्यते तत्प्रविश्य च ।
मन्त्रयेदाहितमनाः कार्यवृद्धिं विवर्द्धयेत् ॥ १८ ॥

ऐकम्पे[ऐकान्त्ये]न हि कार्याणि प्रविचार्य पुनःपुनः ।
प्रविश्येत्स्वहितान्वेषी मतमेषां पृथक् पृथक् ॥ १९ ॥

धृतेऽपि मन्त्रे मन्त्रज्ञैः स्वयं भूयोविचारयेत् ।
तथा वृत्ते तदवृत्त[वर्तेत मन्त्र]ज्ञो यथाश्वा[स्वा]र्थं न पीडयेत्(?) ॥ २० ॥

संपत्तौ च विपत्तौ च विचारो हि महौषधम् ।
विचारात्तीक्ष्णतामेति धीस्तया हि रिपुं जयेत् ॥ २१ ॥

यस्तर्केणानुसन्धत्ते विचारे कि[कु]शलो हि सः ।
अस्मत्कृते तत्कर्तव्यः श्रमो वै द्वैतद(र्पण)र्शने ॥ २२ ॥

मन्त्रिणः स्वार्थतात्पर्याद्दीर्घमिच्छन्ति विग्रहम् ।
मन्त्रिणां भाग्यतामेति दीर्घकार्याकुलो नृपः ॥ २३ ॥

प्रभावोत्साहशक्तिभ्यां मन्त्रशक्तिः प्रशस्यते ।
प्रभावोत्साहवान् काव्यो जितो देवपुरोधसा ॥ २४ ॥

युधिष्ठिरो महाराजो भीष्मादीन्रणदुर्जयान् ।
परं मन्त्रबलेनैव जित्वा राज्यमवाप्तवान् ॥ २५ ॥

शक्याशक्यपरिच्छेदं कुर्यादबुद्धया प्रसन्नया ।
केवलं दन्तभङ्गाय दन्तिनः शैलताडनम् ॥ २६ ॥

अशक्यारम्भवृत्तीनां कु(कु)तः क्लेशादृते फलम् ।
आकाशमास्वादयतः कुतस्तु कबलग्रहः ॥ २७ ॥

अशक्ये न प्रवर्तेत शक्यं न च परित्यजेत् ।
अकाले शक्यमर्थं च मतिमान् न [स] माचरेत् ॥ २८ ॥

दुर्बलः प्रबलामित्रं गच्छन्नाशमवाप्नुयात् ।
यथा पतङ्गः प्रपतन् पावकं नाशमृच्छति ॥ २९ ॥

शास्त्रचक्षुर्विना सर्प(र्व)न्नधः पतति भूपतिः ।
गच्छन्नधस्तात्पतति यथार्थोऽहि पदे पदे ॥ ३० ॥

प्रारब्धानि यथाशास्त्रं कार्याण्यमलबुद्धिभिः ।
वनानीव मनोहारि प्रयच्छन्त्यचिरात्फलम् ॥ ३१ ॥

सम्यगारभ्यमाणन्तु कर्म यद्यपि निष्फलम् ।
न तत्तथा तापयति यथा मोहसमाहितम् ॥ ३२ ॥

यत्तु सम्यगुपक्रान्तं कार्यमेति विपर्ययम् ।
पुंसां [पुमां]स्तन्त्रानुपालभ्यो दैवान्तरितपौरुषः ॥ ३३ ॥

ज्ञात्वा बलाबलं युद्धे मतिं कुर्यात्परात्मनोः ।
एतदेव हि विज्ञानं यदात्मपरवेदनम् ॥ ३४ ॥

निष्फलं श्लेष्मशवथं सन्दिग्धाल्पफलं तथा ।
न कर्म कुर्यान्मतिमान् महद्वैरानुबन्धि च ॥ ३५ ॥

तदात्वायति संयु(द्ध)क्तं सुविशुद्धक्रमागतम् ।
हितानुबन्धि च सदा कर्म सद्भिः प्रशस्यते ॥ ३६ ॥

हितानुबन्धि तज्ज्ञेयं येन याति न वाच्यताम् ।
तस्मिन्कर्मणि युज्येत तदात्वकटुकेऽपि च ॥ ३७ ॥

नातीयात्कार्ययोगं हि कृत्वा मन्त्रं सुनिश्चितम् ।
अलभ्ययोगेऽनुयोगः कार्ययोगोऽतिदुर्लभः ॥ ३८ ॥

आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ३९ ॥

सहायाः साधनोपायाः विभागौ देशकालयोः ।
विपत्तेश्च प्रतीकारो मन्त्रः पञ्चाङ्ग इष्यते ॥ ४० ॥

मन्त्रशक्त्या सुसम्पन्नः प्रभावोत्साहवान्नृपः ।
उद्यो[गव्य]गाद्व्यवसायाभ्यामुपायान्निक्षिपेत्परे ॥ ४१ ॥

उपायपूर्वं लिप्सेत कालं वीक्ष्य समुत्पनेत् ।
पश्चात्तापाय निर्दिष्टा विक्रमैकरसज्ञता ॥ ४२ ॥

सहसोत्पथि दुष्टेभ्यो दुष्करं संपदर्शनम् ।
उपायेन पदं मूर्ध्नि न्यस्यते मत्तदन्तिनः ॥ ४३ ॥

लोकप्रसिद्धमेवैतद्वारि वह्नेर्नियामकम् ।
उपायोपगृहीतेन तत्तेनैव तु शोष्यते ॥ ४४ ॥

साम दानं च भेदश्च दण्डश्चेति चतुष्टयम् ।
मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः ॥ ४५ ॥

परस्परोपकाराणां दर्शनं गुणकीर्तनम् ।
सम्बन्धस्य समाख्यानं मायायाः संप्रदर्शनम् ॥ ४६ ॥

वाचा पेशलया साधु तवाहमिति चार्पणम् ।
इति सामप्रयोगज्ञैः साम पञ्चविधं स्मृतम् ॥ ४७ ॥

साम्रान्य[सामान्य]सिद्धये विद्वान् यतेत यतमानसः ।
सामसिद्धिं प्रशंसन्ति सर्वतस्तु विपश्चितः ॥ ४८ ॥

क्षीरोदो मथितः साम्ना फलायामरदानवैः ।
निर्जघ्निरे धार्तराष्ट्राः सामप्रद्वेषिणोऽचिरात् ॥ ४९ ॥

यःसंप्राप्तधनोत्सर्ग उत्तमाधममध्यमाः ।
प्रधानं च तथा तस्य गृहीतस्यानुमोदनम् ॥ ५० ॥

द्रव्यदानमपूर्वं च स्वीयं ग्राहप्रवर्तनम् ।
देयस्य प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम् ॥ ५१ ॥

उपचिन्त्यापि दातव्यं बलिने शान्तिमिच्छता ।
समूल एव गान्धारिरप्रयच्छन् गता(:) क्षयम् ॥ ५२ ॥

स्नेहरागापनयनं हर्षस्योत्पादनं तथा ।
मिथो भेदश्च भेदज्ञैः भेदस्तु त्रिविधः स्मृतः ॥ ५३ ॥

आत्मनो विक्रियमिव कुर्वन्दद्यात्समीहितम् ।
जलवत्पर्वतान् शत्रून् भिन्द्यादनभिलक्षितः ॥ ५४ ॥

कियत्प्रयच्छम् भूयस्स्यात् तृष्णया प्रविलोभयन् ।
भिन्द्याच्चतुर्विधान् भेदान् प्रविश्योभयवेतनैः ॥ ५५ ॥

अलब्धविभवो लुब्धो मानी चाप्यवमानितः ।
कोपनः कोपितोऽकस्मात्तथा (भी)(शान्त)तश्च भीषितः ॥ ५६ ॥

यथाभिलषितैः कामैः भिन्द्यादेतांश्चतुर्विधान् ।
स्वपक्षे परपक्षे च यथावत्प्रशमं नयेत् ॥ ५७ ॥

भेदं कुर्वीत यत्नेन मन्त्रमध्य(ध्ये) पुरोधसाम् ।
तेषु भिन्नेषु भेदो हि युवराजे यथोर्जिते ॥ ५८ ॥

युवराजः सैन्यनाथो भुजावर्तौ महीपतेः ।
मन्त्रि(न्त्री)नेत्रं हि तद्भेद एकस्यापि च तद्वधः ॥ ५९ ॥

सर्वावस्थं हि मेधावी तत्कुलीनं विकारयेत् ।
विकृतस्तु कुलीनस्तु स्वयोनिं प्रसनेऽग्निवत् ॥ ६० ॥

तत्रोपजापः कर्तव्यः यः कोपानुग्रहक्षमः ।
स कल्याणः शठो वेति परीक्ष्यः सूक्ष्मया धिया ॥ ६१ ॥

कल्याणस्तु यथाशक्ति करोति सफलं वचः ।
शठः पक्षौ चालयति द्वावप्यर्थोऽप्य(प)लिप्सया ॥ ६२ ॥

मिथ्याभिशप्तः श्रीकाम आहूयापतिमानितः ।
राजद्वेषात्तत्कुलीनो द्विषते यस्तु भूभुजा ॥ ६३ ॥

रणप्रियः साहसिकः आत्मसंभावितस्तथा ।
विच्छिन्नधर्मकामार्थः क्रुद्धो मानी विमानितः ॥ ६४ ॥

भीतस्स्वदोषसन्त्रस्तः कृतवैरश्च मत्सरी ।
अतुल्येन सहाशक्तस्तुल्यमाना निराकृतिः ॥ ६५ ॥

बहिर्द्रव्यो बहिर्बन्धुर्भिन्द्यादेतान् परस्थिरान् ।
समतृष्णाभिसन्धानमत्युग्रभयदर्शनम् ॥ ६६ ॥

प्रधानं सामदानं च भेदोपायाः प्रकीर्तिताः ।
भेदं कुर्वीत मतिमान् विगृहीतो बलीयसा ॥ ६७ ॥

दण्डावकौ सुरैर्भित्वा बलवन्तौ पराजितौ ।
वधोऽर्थग्रहणं चैव परिक्लेशस्तथैव च ॥ ६८ ॥

इति दण्डविधानज्ञैः दण्डस्त्रिविधः स्मृतः ।
उत्साहदेशकालैश्च संयुक्तः सुसहायवान् ॥ ६९ ॥

युधिष्ठिर इवात्यर्थं दण्डेनाशु जयेदरीन् ।
आत्मनः शक्तिमुद्वीक्ष्य दण्डमभ्यधिके नयेत् ॥ ७० ॥

एकाकी शक्तिसंपन्नो रामः क्षत्रं पुरावधीत् ।
देवताः प्रतिमान्तस्थाः पूजयंस्तद्गतैर्नरैः ॥ ७१ ॥

पुंसां सतीर्थसंवीतो निशि चाद्भुतदर्शनम् ।
देवतोल्कापिशाचानां शिवानाञ्च स्वरूपता ॥ ७२ ॥

इत्यादिमाया विज्ञेया मानुषा मानुषैश्शरैः ।
कामतो रूपधारित्वं शस्त्राग्न्यश्माम्बुवर्षणम् ॥ ७३ ॥

तमोऽनिलो वा मेघो वा इति माया ह्यमानुषी ।
जघान कीचकं भीम आस्थितः स्त्रीस्वरूपताम् ॥ ७४ ॥

चिरं प्रच्छन्नरूपोऽभूद्दिव्यया माययानलः ।
अन्याये व्यसने युद्धे प्रवृत्तस्यानिवारणम् ॥ ७५ ॥

इत्युपेक्षार्थकुशलैः उपेक्षा त्रिविधा स्मृता ।
अकार्ये सज्जमानन्तु विषयेष्वकृतेक्षणः ॥ ७६ ॥

कीचकस्तु विराटेन हन्यतामित्युपेक्षितः ।
संरब्धो भीमसेनेन स्वार्थविच्छेदभीतया ॥ ७७ ॥

हिडिम्बया निजोभ्राता हन्यतामित्युपेक्षितः ।
मेघान्धकारवृष्ट्यग्नि पर्वताद्भुतदर्शनम् ॥ ७८ ॥

दूरस्थानां च सैन्यानां दर्शनं ध्वजशालिनाम् ।
छिन्नपाटितभिन्नानां संश्रुतानां च दर्शनम् ॥ ७९ ॥

इतीन्द्रजालं द्विषतां भीत्यर्थमुपलक्षयेत् ।
इत्युपायाः समाख्याताः राज्ञो नानार्थसाधकाः ॥ ८० ॥

सन्धिश्च विग्रहो यानमासनं द्वैधमाश्रयः ।
षड्गुणाः स्युः फलं तेषामुपायानां यथायथम् ॥ ८१ ॥

परस्परानभिभवफलको यो (....) भूपतिः ।
स्वीकारःस्यादथो राज्ञः संबन्धः परिकीर्तितः ॥ ८२ ॥

अमर्षोपगृहीतानां मन्युसन्तप्तचेतसाम् ।
परस्परापकारो यः स स्याद्विग्रहसंज्ञकः ॥ ८३ ॥

यातव्यं प्रति यात्रा या सा यानमिति भण्यते ।
देशकालानुरोधेन दुर्गबुद्ध्यादिकारयन् ॥ ८४ ॥

स्थानं शत्रुजयार्थं यत् तदासनमिहोच्यते ।
बलिनोर्द्विषतोर्मध्ये काला(का)क्षिवदलक्षितम् ॥ ८५ ॥

द्वैधीभागे[वे]न यत्स्थानं तद्वै[द्वै]धमिति भण्यते ।
स्वाशक्तया प्रबलस्यारेर्धार्मिकस्य य आश्रयः ॥ ८६ ॥

आश्रयः स गुणः प्रोक्तो गुणवर्त(विद्भि.)विचक्षणैः ।
इति षाड्गुण्यमन्ये तु द्वैगुण्यं संप्रचक्षते ॥ ८७ ॥

यानासने विग्रहस्य रूपं सन्धेः परं स्मृतम् ।
अभिगच्छंश्च तिष्ठंश्च विग्रहं कुरुते यतः ॥ ८८ ॥

ततो यानासने प्राज्ञैः विग्रहः परिकीर्तितः ।
असन्धाय यतो नास्ति द्वैधीभावश्च संश्रयः ॥ ८९ ॥

तत्तो द्वावपि तौ प्राज्ञैरुपसन्धेरुदाहृतम् ।
सन्धिश्च विग्रहश्चैव द्वावेव च गुणौ ततः ॥ ९० ॥

एतौ च संश्रयश्चैव त्रैगुण्यमिति चापरे ।
यस्मादन्यं संश्रयते बाध्यमानो बलीयसा ॥ ९१ ॥

तत्सन्धेः संश्रयोऽन्यस्स्यादित्युवाच बृहस्पतिः ।
सन्ध्यादयो गुणास्सर्वे विग्रहादुत्थिता यतः ॥ ९२ ॥

ततो मुख्यगुणस्स स्यादेकोऽन्ये तु तदुत्थिताः ।
कार्यकारणभेदेन भेदस्स्यान्न स्वरूपतः ॥ ९३ ॥

एतच्च मतमस्माकं ज्ञातव्यं नीतिकोविदैः ।
सामादीनामुपायानां यस्य यत्रोपयोगिता ॥ ९४ ॥

तदुच्यते यथाशास्त्रमधुना तत्प्रसङ्गतः ।
साम्ना दानेन भेदेन कुर्यात्सन्धिं पुरोरिणा ॥ ९५ ॥

द्वैधं च संश्रयं चापि सन्धिसाध्यं विचक्षणः ।
दण्डादीन्साध्यसाध्यारौ विग्रहार्थं प्रयोजयेत् ॥ ९६ ॥

यानार्थमासनार्थं च विग्रहार्थं तदुद्भवः ।
सामादिकार्यः सन्ध्यादि दण्डादिप्रभवस्तथा ॥ ९७ ॥

विग्रहादिर्यदाकार्यं तद्ब्रूमः स प्रकारकम् ।
बलीयसाभियुक्तश्च नृपोऽनन्यप्रतिक्रियः ॥ ९८ ॥

आपन्नः सन्धिमिच्छेच्च कुर्वाणः कालयापनम् ।
सुहृद्बलं तथा राज्यमात्मानं वृत्तिमेव च ॥ ९९ ॥

हृदि सन्देहदोलस्थं को हि कुर्यादबालिशः ।
यत्रायुद्धे ध्रुवो मृत्युः युद्धे जीवनसंशयः ॥ १०० ॥

स एव युद्धकालः स्यान्नृपस्येति मतं हि नः ।
कपाल उपहारश्च सन्तानः सङ्गतस्तथा ॥ १०१ ॥

उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ।
अदिष्टपुरुषादिष्टा वात्मामिष उपग्रहः ॥ १०२ ॥

परिक्रियस्तथोच्छिन्नस्तथा च परिभूषणः ।
स्कन्धोपनेयः सन्धिश्च षोडशः परिकीर्तितः ॥ १०३ ॥

कलायसन्धिर्विज्ञेयः केवलं समसन्धितः ।
संप्रदानाद्भवति य उपहारः स उच्यते ॥ १०४ ॥

सन्तानसन्धिर्विज्ञेयो दारिकादानपूर्वकः ।
सद्भिस्सङ्गतसन्धिस्तु मैत्रीपूर्व उदाहृतः ॥ १०५ ॥

यावदायुः प्रमाणन्तु समानार्थप्रयोजनः ।
सम्पत्तौ [संपत्तौ च] विपत्तौ च कारणैर्यो न भिद्यते ॥ १०६ ॥

सङ्गतः सन्धिरेवेह प्रकृष्टत्वात्सुवर्णवत् ।
भव्यमेकार्थसिद्धिं तु समुद्दिश्य क्रियेत यः ॥ १०७ ॥

स उपन्यासकुशलैरुपन्यास उदाहृतः ।
मयास्योपकृतं पूर्वं संप्रत्यपकरिष्यति ॥ १०८ ॥

इति यः क्रियते सन्धिः प्रतीकारः स उच्यते ।
उपकारं करोम्यस्य ममाप्येष करिष्यते ॥ १०९ ॥

अयश्चापि प्रतीकारो रामसुग्रीवयोरिव ।
संयोगः संहतावेककार्यार्थं यदि गच्छतः ॥ ११० ॥

आवयोः योधमुख्याभ्यां मदर्थं साध्यतामिति ।
यस्मिन्पणश्च क्रियते स सन्धिः पुरुषान्तरः ॥ १११ ॥

त्वयैकेन मदीयोऽर्थः संप्रसाध्यस्त्वसाविति ।
यत्र शत्रुः पणं कुर्यात्सोऽदिष्ट(निष्ट)पुरुषः स्मृतः ॥ ११२ ॥

यत्र भूम्येकदेशेन पणेन रिपुरूर्जितः ।
सन्धीयते सन्धिकृद्भिरादिष्टः स उदाहृतः ॥ ११३ ॥

स्वसैन्येन तु सन्धानमात्मामिष इति स्मृतः ।
क्रियते प्राणरक्षार्थं सर्वदा स उपग्रहः ॥ ११४ ॥

कोशांशेनाथ कुप्येन सर्वकोशेन वा पुनः ।
शेषप्रकृतिरक्षां च परिक्त्रिय[क्रिय] उदाहृतः ॥ ११५ ॥

भुवां सारवतीनान्तु दानादुच्छिन्न उच्यते ।
सर्वभूम्युत्थितफलदानेन परिभूषणः ॥ ११६ ॥

परिच्छिन्नं फलं यत्र स्कन्धः स्कन्धेन नीयते ।
स्कन्धोपनेयं तं प्राहुः सन्धिं सन्धिविदो जनाः ॥ ११७ ॥

परस्परोपकारश्च मैत्रस्सम्बन्धकस्तथा ।
उपहारश्च विज्ञेयाः चत्वारस्तत्वसन्धयः ॥ ११८ ॥

एतेष्वेव विशत्त्य[न्त्यन्य] इत्यूचुः सन्धिकोविदाः ।
उपहारोदानपूर्वो मैत्रीपूर्वश्च सङ्गतः ॥ ११९ ॥

द्वावेव सन्धि[न्धी]विज्ञेयाविति केचित्प्रचक्षते ।
एक एवोपहारस्तु सन्धिरेतन्मतं हि नः ॥ १२० ॥

अभियोक्तावनीपोऽस्मादलब्ध्वा न निवर्तते ।
मैत्रीकरणकालेऽपि यत्किञ्चिद्दीयतेऽथवा ॥ १२१ ॥

तवास्मीत्यपि यो ब्रूयात्तस्य दानन्तु तद्भवेत् ।
उपहाराद्दते तस्मात्सन्धिरन्यो न विद्यते ॥ १२२ ॥

बालो वृद्धो दीर्घरोगस्तथा ज्ञातिबहिष्कृतः ।
भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥ १२३ ॥

विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् ।
अनेकचित्तमन्त्रस्तु देवब्राह्मणनिन्दकः ॥ १२४ ॥

दैवोपहतकश्चैव दैवनिन्दक एव च ।
दुर्भिक्षव्यसनोपेतो बलव्यसनसङ्कुलः ॥ १२५ ॥

अदेशस्थो बहुरिपुर्युक्तकालोन यः पुनः ।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ १२६ ॥

एतैस्सन्धिं न कुर्वीत विगृह्णीयात्तु केवलम् ।
एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपो[र्वे]र्विशम् ॥ १२७ ॥

बालस्य ह्यपभावत्वा[त्त्]लोको युद्धमिच्छति ।
स्वयं योद्धुमशक्तश्च परार्थे को हि युध्यते ॥ १२८ ॥

उत्साहशक्तिहीनत्वादवृद्धो दीर्घामयस्तथा ।
स्वैरेव परिभूयेते विगृह्यौ द्वावसंशयम् ॥ १२९ ॥

सुखोच्छेद्यश्च भवति तथा ज्ञातिर्बहिष्कृतः ।
एतदैनं विनिघ्नन्ति कायस्त्वात्मसात्कृताः ? ॥ १३० ॥

भीरुर्युद्धपरित्यागात्स्वयमेवानुगच्छति ।
वीरोऽप्यवीरपुरुषैः सङ्ग्रामे तैर्विमुच्यते ॥ १३१ ॥

लुब्धत्वासन्नभागित्वान्न युध्यन्तेऽनुजीविनः ।
लुब्धोऽनुजीवितैरेव दानहीनो निहन्यते ॥ १३२ ॥

संत्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधि ।
सुखाभियोग्यो[ध्यो] भवति विषयेष्वतिसक्तिमान् ॥ १३३ ॥

अनेकचित्तमन्त्रस्तु द्वेष्यो भवति मन्त्रिणाम् ।
अनपेक्षितचित्तत्वात्कार्ये तैः स उपेक्ष्यते ॥ १३४ ॥

सदाधर्मबलीयस्त्वाद्देवब्राह्मणनिन्दकः ।
विशीर्यते स्वयं ह्येव दैवोपहतकस्तथा ॥ १३५ ॥

संपत्तेश्च विपत्तेश्च दैवमेव हि कारणम् ।
इति [दै]धैवपरोयोऽयमात्मनैव निहन्यते ॥ १३६ ॥

दुर्भिक्षव्यसनी चैव स्वयमेवावसीदति ।
बलव्यसनयुक्तस्य योद्धुं शक्तिर्न जायते ॥ १३७ ॥

अदेशस्थोहि रिपूणां[पुणा] स्वल्पकेनापि कथ्य[वध्य]ते ।
ग्राह्यो[हो]ल्पीयानपि जले गजेन्द्रमप(पि)कर्षति ॥ १३८ ॥

बहुमित्रस्तु सन्त्रस्तुः श्येनमध्ये कपोतवत् ।
तेनैव गच्छति यथा तेनैवाशु विपद्यते ॥ १३९ ॥

अकालयुक्तसैन्यस्तु हन्यते कालयोधिना ।
कौशिकेन हयो[तोया]ति निशीथ इव वायसः ॥ १४० ॥

सत्यधर्मव्यपेतेन न सन्दध्यात्कथञ्चन ।
स सन्धितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ १४१ ॥

सत्यार्यधार्मिकानार्यभ्रातृसङ्घातवान्बली ।
अनेकविजयी चेति सन्धेयाः संपकीर्तिताः ॥ १४२ ॥

सत्योऽनुपालयन्सत्यं सन्धितो नैति विक्रियाम् ।
प्राणबाधेष्वपि व्यक्तमार्यो नार्यी[या]त्यनार्यताम् ॥ १४३ ॥

धार्मिकस्याभियुक्तस्य सर्व एव हि युध्यते ।
प्रजानुरागाद्धर्माच्च दुःखोच्छेद्यो हि धार्मिकः ॥ १४४ ॥

सन्धिः कार्योऽप्यनार्येण संप्राप्योच्छेदयेद्द्विषः ।
रेणुकायास्सुत इव समूलं च निकृन्तति ॥ १४५ ॥

सङ्घातवान्यथावेणुर्निबिड कण्ठकैर्वृतः ।
न शक्यते समुच्छेत्तुं भ्रातृसंधानवांस्तथा ॥ १४६ ॥

ईषदायस्यमानोऽपि सिंहो मत्त इव द्विपम् ।
निहन्ति बलवांस्तस्मात्सन्धेयः शिवमिच्छता ॥ १४७ ॥

बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
प्रतिवारं न हि घनः कदाचिदुपसर्पति ॥ १४८ ॥

बलीयसि प्रणमतां काले वि[प्र]कृतामपि ।
संपदो नापगच्छन्ति निम्नानामिवनिम्नगाः ॥ १४९ ॥

जमदग्नेस्सुतस्येव सर्वः सर्वत्र सर्वदा ।
अनेकयुद्धजयिनः प्रतापादेव भज्यते ॥ १५० ॥

अनेकयुद्धविजयी सन्धानं यस्य गच्छति ।
तत्प्रभावेन तस्याशु वशं गच्छन्ति विद्विषः ॥ १५१ ॥

न जातु गच्छेद्विश्वासं सन्धितोऽपि हि बुद्धिमान् ।
अद्रोहसमयं कृत्वा वृत्रमिन्द्रः पुरावधीत् ॥ १५२ ॥

बलीयसाभिसन्धाय तं प्रविश्य प्रयत्नवान् ।
तथाऽसावनुगन्तव्यो यथा विस्रम्भमाप्नुयात् ॥ १५३ ॥

विस्रम्भान्नित्यमुद्युक्तो निगूढाकारचेष्टितः ।
प्रियाण्येवाभिभाषेत तत्कार्यं कार्यमेव तत् ॥ १५४ ॥

विस्रम्भापि[त्रि]यतामेति विस्रम्भात्कार्यमृच्छति ।
विस्रम्भादेव देवेन्द्रो दितेर्वि[र्वं]शमशातयेत् ॥ १५५ ॥

युवराजेन सन्धाय प्रधानपुरुषेण वा ।
अन्तःप्रकोपं जनयेदभियोक्तुः स्थिरात्मनः ॥ १५६ ॥

अर्थोत्सर्गेण महता लेख्यैश्चाप्यर्थसंहतैः ।
प्रधानपुरुषस्येह कुर्वीताधीरमात्मन ॥ १५७ ॥

दूषिते हि महामात्ये रिपुरुग्रोऽपि धीमता ।
स्वपक्षे यात्यविश्वासमित्थं भूतश्च निष्क्रियः ॥ १५८ ॥

सुषुप्तिवृत्या संतिष्ठन् बलेन स्वेन वै रिपुम् ।
सन्तापयेत्पुरः पश्चात्तेन सन्धिं समाचरेत् ॥ १५९ ॥

सन्धिभेदाः समाख्यातास्तज्ज्ञात्वा सन्धिमाचरेत् ।
सामादीनामुपायानां त्रयाणामप्यगोचरे ॥ १६० ॥

दण्डादिना विग्रहन्तु कुर्याच्छत्रुनिपीडितः ।
देशकालबलोपेतः प्रारभेतैव विग्रहम् ॥ १६१ ॥

आत्मनोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा ।
राज्यस्त्रीस्थानदेशानां ज्ञाते[श्चै]स्यैव धनस्य च ॥ १६२ ॥

अपहारो मदो मानः पीडा वैषयिकी तथा ।
ज्ञानार्थधर्मशक्तीनां विघातो दैवमेव च ॥ १६३ ॥

मित्रापचापमानश्च तथा बन्धुविनाशनम् ।
भूतानुग्रहविच्छेदस्तथा मण्डलदूषणम् ॥ १६४ ॥

एकार्थाभिनिवेशित्वमिति विग्रहयोनय ।
यदा मन्येत मतिमान् हृष्टं पुष्टं स्वकं बलम् ॥ १६५ ॥

परस्य विपरीतं च तदा विग्रहमाचरेत ।
स्फीतं चाप्यनुरक्तं च यदा प्रकृतिमण्डलम् ॥ १६६ ॥

परस्य विपरीतं च तदा विग्रहमाचरेत् ।
उशनापि यदा दैवं सुप्रयुक्तमुपलक्षितम् ॥ १६७ ॥

परस्य विपरीतं च तदा विग्रहमाचरेत् ।
मित्रमाक्रन्द आसारो यदा स्युर्दृढशक्तय· ॥ १६८ ॥

परस्य विपरीताश्च तदा विग्रहमाचरेत् ।
भूमिर्मित्रं हिरण्यं च विग्रहस्य फलं त्रयम् ॥ १६९ ॥

यदैतन्नियतं भावि तदा विग्रहमाचरेत् ।
गुरु मित्रं ततो वित्तं तस्माद्भूमिर्गरीयसी ॥ १७० ॥

भूमेर्विभूतयस्सर्वास्ताभ्यो बन्धुसुहृद्गणाः ।
तदात्वे दोषसंयुक्तमायत्यामपि दोषकृत् ॥ १७१ ॥

तदात्वे निष्फलं तद्वदायत्यामपि निष्फलम् ।
तदात्वे दोषसंयुक्तमायत्यामपि निष्फलम ॥ १७२ ॥

आयत्यां दोषसंयुक्तं तदात्वे फलवर्जितम् ।
तदात्वे तु फलं किञ्चिदायत्यां खलु निष्फलम् ॥ १७३ ॥

आयत्यां स्वल्पफलदं तदात्वे स्वल्फ[फ]लं परम् ।
आयत्यां स्तोकफलदं तदात्वे दोषदं महत् ॥ १७४ ॥

तदात्वायत्यल्पफलं समानफलकं तथा ।
तदात्वे फलसंयुक्तमायत्यां बहुदोषदम् ॥ १७५ ॥

एवंविधं विग्रहञ्च न कुर्यान्नीतिमान्नृपः ।
आयत्यां दोषरहितमायत्यां यत्फलान्वितम् ॥ १७६ ॥

तदेव मतिमान्कुर्यादिति नीतिविदां मतम् ।
आयत्यां च तदात्वे च फलवद्दोषवर्जितम् ॥ १७७ ॥

विग्रहं मतिमान्कुर्यादिति ब्रूमो वयं पुनः ।
विग्रहोपशमोपायः प्रसङ्गादभिधीयते ॥ १७८ ॥

आग्र(ग)तं विग्रहं विद्वानुपायैः प्रशमं नयेत् ।
समाक्रान्तो बलवता विग्रहध्वंसिनीं पुनः ॥ १७९ ॥

श्रयेत वैतसीं वृत्तिं न भौजङ्गीं कदाचन ।
क्रमाद्वैसन् [द्वैतस] वृत्तिः सन् प्राप्नोति विपुलां श्रियम् ॥ १८० ॥

भुजङ्गवृत्तिराप्नोतिव[भय]मेव तु केवलम् ।
कौर्मं सङ्कोचमास्थाय प्रहारमपि व(म)र्षयेत् ॥ १८१ ॥

काले प्राप्ते तु मतिमानुत्तिष्ठेत्क्रूरसर्पवत् ।
काले सहिष्णुर्गिरिवदसहिष्णुश्च सर्पवत् ॥ १८२ ॥

स्कन्धेनापि वहेत्काले प्रियाणि समुदीरयन् ।
प्रोक्तश्च विग्रहोऽस्माभिरधुना यानमुच्यते ॥ १८३ ॥

उत्कृष्टबलवीर्यस्य विजिगीषोर्जयैषिणः ।
गुणानुरक्तप्रकृतियात्रा यानमिति स्मृतम् ॥ १८४ ॥

अमात्यराष्ट्रदुर्गाणि बलं कोशः सुहृन्नृपः ।
सप्तप्रकृतिकं राज्यमित्युवाच बृहस्पतिः ॥ १८५ ॥

अमात्यराष्ट्रदुर्गाणि बलं कोशः सुहृन्नृपः ।
राज्यं सप्ताङ्गमेवं स्यादिति शुक्रोऽभ्यभा(प्य)षत ॥ १८६ ॥

संपन्नस्तत्प्रकृतिभिर्महोत्साहः कृतश्रमः ।
जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः ॥ १८७ ॥

लक्षणान्यथ वक्ष्यन्तेऽमात्यादीनां यथाक्रमम् ।
एतेषां प्रकृतित्वं च कर्माणि व्यसनान्यपि ॥ १८८ ॥

स्वामिभक्तः शुचिः शूरः सत्यसत्त्वश्रुतान्वितः ।
गूढमन्त्रः स्तम्भहीनः प्रज्ञोत्साहप्रभाववान् ॥ १८९ ॥

अरोगी धृतिमान् दक्षः कुलीनः स्थैर्यसंयुतः ।
ज्ञाननिश्चयवान्वाग्मी मेधावी चानुरागवान् ॥ १९० ॥

दण्डनीतेः प्रयोक्ता यः सचिवः स्यान्महीपतेः ।
अथर्ववेदवित्कर्म कुशी[श]लः स्यात्पुरोहितः ॥ १९१ ॥

योऽति[ज्योतिश]शास्त्रार्थतत्त्वज्ञः प्रश्नविद्गणको मतः ।
सस्या(स्यो)त्करवती पण्यखनिद्रव्यसमन्विता ॥ १९२ ॥

गोहिता भूरिसलिला पुण्यैर्जनपदैर्वृता ।
रम्या सकुञ्जीरव[ञ्जरव]ना वारीजलपथान्विता ॥ १९३ ॥

भूमिर्विभूतये राज्ञां राष्ट्रमित्यभिधीयते ।
पृथुसीमं महाखातमुच्चप्राकारगोपुरम् ॥ १९४ ॥

आलानायुधयन्त्राढ्यं वीरयोधैरधिष्ठितम् ।
गुप्तिप्रधानमाचार्या दुर्गं समनुमेनिरे ॥ १९५ ॥

भूमिदुर्गं शैलदुर्गं वनदुर्गं तथा भवेत् ।
नीरदुर्गं नारदुर्गं धर्म(न्व)दुर्गं च षड्विधम् ॥ १९६ ॥

प्रशस्तं गिरिदुर्गञ्च पूर्वाचार्याः प्रचक्षते ।
धर्म(न्व)दुर्गं प्रशस्तं स्यादिति ब्रूमो वयं पुनः ॥ १९७ ॥

पितृपैतामहो वंश्यः संहतो दन्तवेतनम् ।
विख्यातपौरुषोत्कर्षः कुशलः कुशलैर्वृतः ॥ १९८ ॥

नानाप्रहरणोपेतो नानायुद्धविशारदः ।
नानायोधसमाकीर्णो नीराजितहयद्विपः ॥ १९९ ॥

प्रवासायासदुःखेषु युद्धेषु च कृतश्रमः ।
अद्वैधः क्षत्रियप्रायो बलो बलविदां मतः ॥ २०० ॥

दण्डनीतेः प्रयोक्तारमध्येतारं च तत्त्वतः ।
सत्यसत्त्वक्षमाधैर्यमाधुर्यार्यगुणान्वितम् ॥ २०१ ॥

प्रभावोत्साहमन्त्रज्ञं मार्जव्यमनुजीविनाम् ।
मित्रवन्तमुदाराख्यं बहुस्वजनबान्धवम् ॥ २०२ ॥

व्यवहारिणमक्षुद्रं पौरप्रकृतिसंमतम् ।
शुभानुबन्धकर्माणमल्पमित्रं बहुश्रुतम् ॥ २०३ ॥

अरोगं व्यायतं शूरं त्यागिनं कालवेदिनम् ।
कल्याणाकृतिसंपन्नं सुसंभाव्यपराक्रमम् ।
गजाश्वरथचर्यासु शिक्षितं सुजितश्रमम् ॥ २०४ ॥

धनुर्युद्धादिकुशलं शीघ्रं च क्रमणक्षमम् ।
युद्धभूमिविभागज्ञं कृतज्ञमनुकम्पिनम् ॥ २०५ ॥

स्वभावचित्तज्ञतया युक्तमश्वनृदन्तिनाम् ।
अदीर्घसूत्रं निस्तन्द्रमनुद्धतममर्षणम् ॥ २०६ ॥

हस्त्यश्वरथपत्तीनां साधुलक्षणवेदिनम् ।
देशभाषास्वभावज्ञं सिंहवद्दृढविक्रमम् ॥ २०७ ॥

दि[दिग्]देशकालविज्ञानसंपन्नं तज्ज्ञसेविनम् ।
भेत्तारं परसैन्यानां कर्तारं सैन्यकर्मणाम् ॥ २०८ ॥

भग्नानां च स्वसैन्यानां साध्वधिष्ठापनक्षमम् ।
चरदूतप्रकारज्ञं महारम्भफलोदयम् ॥ २०९ ॥

पराभवेषु निर्विण्णं श्रीमद्रामार्थतत्परम् ।
इत्यादिलक्षणोपेतं कुर्यात्सेनापतिं नृपः ॥ २१० ॥

ध्वजिनीश्च सदोद्युक्तः स च पायाद्दिवानिशम् ।
मौलभृतश्रेणिसुहृद्द्विषदाटविकक्रमात् ।
षड्विधं बलमेतस्य पूर्वं पूर्वं महत्तरम् ॥ २११ ॥

सहासितं सानुरागं सत्कृतं मौलमुच्यते ।
भृतं राजाधीनवृत्ति क्षिप्रोत्थं निकटस्थितम् ॥ २१२ ॥

श्रेणिसैन्यं जानपदं तुल्यसंघर्षणासहम् ।
एकार्थोपगतं प्रेम्णा हृद्यं मित्रबलं स्मृतम् ॥ २१३ ॥

शत्रुसैन्यं सत्यसन्धं धार्मिकं स्ववशे स्थितम् ।
अटवीसंभवं म(यत्त)त्तं(त्) ज्ञेयमाटविकं बलम् ॥ २१४ ॥

सत्कारादनुरागाच्च सहसङ्कथनासनात् ।
नित्यं तद्भाविभावत्वान्मौलं भृतबलाद्गुरु ॥ २१५ ॥

सनि[न्नि]कृष्टति[त]या नित्यं क्षिप्रोत्थानतया तथा ।
वृत्तेश्च स्वाम्यधीनत्वाद्भृतं श्रेणिबलाद्गुरु ॥ २१६ ॥

तुल्यात्संघर्षणामर्षात्सुखलाभा[त्त]थैव च ।
बलादानपदत्वाच्च मित्रा[त्रात्]श्रेणिबलं गुरु ।
सङ्ख्यातदेशकालत्वादेकार्थोपगमात्तथा ॥ २१७ ॥

बलान्मदनयोगाच्च शत्रोर्मित्रबलं गुरु ।
प्रकृत्या धार्मिकाल्लुब्धान्निर्वीर्यात्सत्यवादिनः ॥ २१८ ॥

तस्मादाटविकेभ्यश्च भवेच्छत्रुबलं गुरु ।
बह्वादानोऽल्पनिस्रावः ख्यातपूजितदैवतः ॥ २१९ ॥

ईप्सितद्रव्यसंपूर्णः सुहृत्स्वाप्तैरधिष्ठितः ।
मुक्ताकनकरत्नाढ्य पितृपैतामहोचितः ॥ २२० ॥

धर्मार्जितो व्ययसहः कोशः कोशकसंमतः ।
शुचिता त्यागिता शौर्यं समानसुखदुःखिता ॥ २२१ ॥

अनुरागश्च दाक्ष्यञ्च सत्यता च सुहृद्गुणाः ।
यस्मिन्नेति[ते] गुणाः सन्ति मित्रं कुर्वीत तं नृपः ॥ २२२ ॥

शूरो वदान्यो विनयी शरणागतवत्सलः ।
शक्तित्रयसुसंपन्नः सत्यसन्धः प्रतापवान् ॥ २२३ ॥

अक्षुद्रः परिवारेशः कृतज्ञो भूपरञ्जनः ।
वाग्मी प्रगल्भः स्मृतिमान् उदग्रो बलवान्वशी ॥ २२४ ॥

नेता दण्डस्य निपुणः सर्वदुष्टप्रतिक्रियः ।
परच्छिद्रानुपेक्षश्च सन्धिविग्रहतत्त्ववित् ।
गूढमन्त्रप्रभावश्च देशकालविभागवित् ॥ २२५ ॥

आदाता सम्यगर्थानां विनियोक्ता च पात्रवित् ।
क्रोधलोभभयद्रोहस्तम्भचापलवर्जितः ॥ २२६ ॥

तस्य नीतिर्दण्डनीतिर्नियतं नीतिरुच्यते ।
इत्यादिगुणसंपन्ने स्वधर्मनिरते स्थिते(रे) ॥ २२७ ॥

निर्वृतं पितरीवास्ते यत्र लोकः स पार्थिवः ।
राजलक्षणसंपन्नः पितुराज्ञापरायणः ॥ २२८ ॥

लोकरञ्जयितौरस्यो युवराजः प्रकीर्तितः ।
प्रकृत्याधिष्ठितो भोगो यथात्वन्यप्रभोक्तरि ॥ २२९ ॥

तथामात्याद्यधिष्ठानाज्जगद्भुङ्क्ते महीपतिः ।
अतः प्रकृतयस्त्वेते प्रोच्यन्ते नीतिकोविदैः ॥ २३० ॥

प्रकृत्यधिष्ठितो भोक्ता भोक्ता भवति पूरुषः ।
पातञ्जलिदीपिकायां बहुधा स्मारितम् [तु तत्] ॥ २३१ ॥

अङ्गापेक्षो यदा राजाप्यङ्गमध्ये प्रवेक्ष्यते ।
किमङ्गित्वेन वक्तव्यमङ्गानाम[ङ्ग्यपेक्षणात्] ।
वरराज्यमिहाङ्गस्स्यात्तत्प्रजापालनादिकम् ॥ २३२ ॥

राज्ञः कर्मतया वाच्यं राजार्थत्वात्स्वकर्मणः ।
राजाङ्गत्वात्परार्थत्वं यतश्शेषत्वलक्षणम् ॥ २३३ ॥

अमात्यराष्ट्रदुर्गाणि बलं कोशः सुहृन्नृपः ।
एतावदुच्यते राज्यमिति नीतिविदां मतम् ॥ २३४ ॥

अथोच्यते यथा वृक्षसमूहो वनमिष्यते ।
प्रकृतीनां समूहस्स्यात्तथा राज्यं तदङ्गि च ॥ २३५ ॥

वृक्षा यथा वनस्याङ्गं तथा प्रकृतयो मताः ।
राज्यस्याङ्गतया भेदा समूहस्य समूहिनः ॥ २३६ ॥

अङ्गत्वेऽपि च सर्वेषां राज्ञः प्राधान्यमिष्यते ।
यथोत्तमाङ्गं देहस्य प्रधानमितराङ्गतः ॥ २३७ ॥

तस्मात्केवलमन्याङ्गहीनं विगुणमिष्यते ।
राज्यं राजविहीनन्तु विनश्यत्यशिरस्कवत् ॥ २३८ ॥

गुणैराधिक्यमन्येभ्यः प्राधान्ये हेतुरिष्यते ।
राज्यमेकाङ्गहीनन्तु न च साधु प्रवर्तते ॥ २३९ ॥

ननु यत्कर्म राज्ञः स्यात्तद्राज्यं स्मर्यते स्मृतौ ।
तत्प्रजापालनाद्यं यत् सप्ताङ्गं कथमुच्यते ॥ २४० ॥

सत्यं विवक्षिते चात्र राज्यशब्देन साधनम् ।
प्रजापालनकर्मादिर्नीतिशास्त्रार्थवेदिभिः ॥ २४१ ॥

विचार्य नीतिशास्त्रार्थमिदमस्माभिरीरितम् ।
गृह्णन्तु सुधियः सूक्ष्ममतयस्तत्त्ववेदिनः ॥ २४२ ॥

असकृत्तेऽधिकरणदर्पणे समुदाहृतः[।] ।
अङ्गाङ्गिनोर्विचारो यं नेह तस्मात्प्रह[त]न्यते ॥ २४३ ॥

मन्त्रैस्सर्वफलावाप्तिरमित्रप्रतिषेधनम् ।
आयव्ययौ दण्डनीती राज्य[ज]राज्याभिरक्षणम् ॥ २४४ ॥

कार्यमायतिसंशुद्धं कोशसम्बन्धनं महत् ।
व्यसनस्य प्रतीकारोऽमात्यकर्म प्रचक्षते ॥ २४५ ॥

ज्ञेयं पौष्टिकशान्त्यादि मुखं(ख्यं) कर्म पुरोधसः ।
ज्योतिश्शास्त्रप्रवीणत्वं कर्म ज्योतिर्विदो ध्रुवम् ॥ २४६ ॥

धान्यवस्त्रहिरण्यानि धरातःसंभवन्ति हि ।
तस्मादेतन्निगदितं भूकार्यं सर्वसाधकम् ॥ २४७ ॥

प्रकृते रक्षणं दुर्गादिति दुर्गक्रिया मता ।
स्वपक्षरक्षणं सम्यक् परपक्षविनाशनम् ॥ २४८ ॥

भूमित्ररत्नलाभश्च बलकार्यं प्रकीर्तितम् ।
सेनासंरक्षणं युद्धे जयकर्म च भूपतेः ॥ २४९ ॥

बलपोषणदानादि कोशकृत्यमुदाहृतम् ।
कुरूणां नृपतिः पूर्वं कोशमालम्ब्य केवलम् ॥ २५० ॥

भीष्मद्रोणमुखान्सर्वान् पाण्डुपुत्रैरयोधयत् ।
सर्वसिद्धिर्मित्रकार्यं तस्मान्मित्रं प्रशस्यते ॥ २५१ ॥

शम्र)[श्रमः] शस्त्रेषु शास्त्रेषु सर्वश्रमसहिष्णुता ।
सर्वयुद्धेषु नैपुण्यमाश्रमाणां च रक्षणम् ॥ २५२ ॥

स्थैर्यं सद्वृत्तिता सत्सु पाठ्य[शाठ्य]युक्तेषु धूर्तता ।
मन्त्रोद्योगः सहिष्णुत्वमुपायैः कार्यसाधनम् ॥ २५३ ॥

प्रकृतेश्चारविज्ञानं तद्रक्षा दुष्टनिग्रहः ।
प्रकृतिव्यसनापोहो धर्ममार्गप्रवर्तने[र्तिता] ।
न्यायतश्च करादानमधर्मप्रतिषेधनम् ॥ २५४ ॥

उपकार्योपकारित्वं पूज्यपूजा कृतज्ञता ।
मित्रोदासीनशत्रूणां चरितज्ञानमेव च ॥ २५५ ॥

आरम्भः कर्मता[णां] शश्वदारम्भशान्ति[स्यान्त]दर्शनम् ।
धर्मेणालब्धलिप्सा च लब्धस्य परिवर्धनम् ॥ २५६ ॥

परिवृद्धस्य विधिवत्पात्रेषु प्रतिपादनम् ।
राज्ञः कर्मेदमधुना युवराजस्य कथ्यते ॥ २५७ ॥

राज्ञः कर्माणि कर्मास्य पितुर्वचनवृत्तिता ।
अधिकं स्यादथो ब्रूमोऽमात्यादिव्यसनानि च ॥ २५८ ॥

आलस्यं लुब्धता स्तम्भः प्रमादो वैरकारिता ।
गर्वो मत्सरिता चैव सचिवव्यसनं विदुः ॥ २५९ ॥

अविचारेण यत्कृत्यं तदपि व्यसनं महत् ।
सवा[र्वा]पदां हि भूमिः स्यादिति ब्रूमो वयं पुनः ॥ २६० ॥

अमार्गगमनं प्रोक्तं व्यसनं हि पुरोधसः ।
गणकव्यसनं प्रोक्तं ज्योतिश्शास्त्रेष्वनादरः ।
अतिवृष्टिरनावृष्टिः मूषिका शलभादयः ॥ २६१ ॥

असत्कारोऽन्यायदण्डः परचक्राणि तस्कराः ।
राजनिप्रियोत्सर्गो मारकव्याधिपीडनम् ॥ २६२ ॥

पशूनां मारको रोगो राष्ट्रस्य व्यसनं विदुः ।
राज्ञःप्रमादो दुष्टानामधिकारोऽप्रतिक्रिया: ॥ २६३ ॥

अनिष्टेष्वपि राष्ट्रस्य व्यसनं स्यान्मतं हि नः ।
विशीर्णमन्त्रप्राकारपरिखात्वमतास्तता(?) ॥ २६४ ॥

अनाप्ताधिष्ठितत्वं चाप्यासेनाप्यनवेक्षणम् ।
क्षीणघासेन्धनत्वं च दुर्गस्य व्यसनं विदुः ॥ २६५ ॥

यदि शत्रुवि[त्रुर्वि]जानाति दुर्गच्छिद्रमुपायतः ।
तदपि व्यसनं घोरमिति ब्रूमो वय पुनः ॥ २६६ ॥

उपरोधः परिक्षेपो नवागमनमेव च ।
अमाननमविश्रान्तिर्यानाप्राप्तिरवेतनम् ॥ २६७ ॥

विक्षीणविविधासारो नायकासन्निधिस्तथा ।
आधियोगः प्रतिहतिर्मौलक्रोधनमेव च ॥ २६८ ॥

अन्तश्शल्यमभूमिश्च स्वामिनाशो विमाननम् ।
दुष्पार्ष्णिग्रहणं रोगो बलस्य व्यसनं विदुः ॥ २६९ ॥

उपरोधादिकं साध्यमुपायैः सकलैरपि ।
अन्तश्शल्यादिकं ज्ञेयमसाध्यं सर्वदैव हि ॥ १७० ॥

अनुरागविहीन[ना]स्याद्यदि सेना महीपतेः ।
तन्महः[त्] व्यसनं च स्याद्बलस्येति मतं हि नः ॥ २७१ ॥

शास्त्रशस्त्रास्त्रसैन्येषु देशकालविभागयोः ।
व्यायामेऽपि प्रमादश्च व्यसनं स्याच्चभूपतेः ॥ २७२ ॥

अल्पादानं बहुस्रावोऽनाप्ताधिष्ठानमेव च ।
व्ययासहत्वं च तथा कोशस्य व्यसनं विदुः ॥ २७३ ॥

यदि कोशे प्रमादस्तु जायते नृपतेः पुनः ।
वाग्दण्डयोश्च पारुष्यमन्यदूषणमेव च ॥ २७४ ॥

पानं स्त्री मृगया द्यूतं व्यसनानि महीपतेः ।
वाग्दण्डयोश्च पारुष्यमन्यदूषणमेव च ॥ २७५ ॥

स्मृतं व्यसनतत्त्वज्ञैः क्रोधजं व्यसनत्रयम् :
कामजं मृगया द्यूतं स्त्रियः पानं तथैव च ॥ २७६ ॥

व्यसनं व्यसनार्थज्ञैश्चतुष्टयमुदाहृतम् ।
वाक्पारुष्यं न कर्तव्यमुद्वेजनमनर्थकम् ॥ २७७ ॥

प्रकुर्यात्प्रियया वाचा प्रायेण जगदात्मसात् ।
अकस्मादेव यःकोपादु[दु]रुक्तं बहुभाषिते ॥ २७८ ॥

तस्मादुद्विजते लोकः सस्फुलिङ्गादिवानलात् ।
हृदये वागसिस्तीक्ष्णो मर्म च्छिन्दन्पतन्मुहुः ॥ २७९ ॥

तेजस्विनं दीपयति स दीप्तो याति वैरिणम् ।
नोद्वेजयेज्जगद्वाचा रूक्षया प्रियवाग्भवेत् ॥ २८० ॥

प्रायेणाप्रियवाक्यो हि कृपणोऽपि निषेव्यते ।
उद्वेजयति भूतानि दण्डपारुष्यवान्नृपः ॥ २८१ ॥

भूतान्युद्विजमानानि द्विषतां यान्ति संश्रयम् ।
आश्रितास्तेन लोकेन विवृद्धिं यान्ति विद्विषः ॥ २८२ ॥

विवृद्धाश्च विनाशाय तस्मान्नोद्वेजयेत्प्रजाः ।
लोकानुग्रहकर्तारः प्रवर्तन्ते महीभुजः ।
लोकवृद्धया नरेन्द्राणां वृद्धिस्तत्संक्षये क्षयः ॥ २८३ ॥

महस्त्य[स्व]प्यपराधेषु दण्डं प्राणान्तिकं त्यजेत् ।
ऋते राज्यप्रहारात्तु तत्र दण्डः प्रशस्यते ॥ २८४ ॥

दूष्यस्य दूषणार्थं हि परित्यागो महीयसः ।
अर्थस्य नीतिशास्त्रज्ञैरेव दूषणमुच्यते ॥ २८५ ॥

तदकस्मात्समाविष्टः कोपेनाति महीयसि ।
नित्यमात्महिताकाङ्क्षी न कुर्यादेवदूषणम् ॥ २८६ ॥

यानि[न] क्षोभो यानपातो पा[या]नानां मरणं तथा ।
दुःखं प्रतप्तसिकता कुशकण्टकभूमयः ॥ २८७ ॥

वधबन्धनसंक्लेशाः सामन्ताटविकादिभिः ।
स्वसैन्यैश्च मुकल्पैश्च परभिन्नैश्च मारणम् ॥ २८८ ॥

ऋक्षाजगरमातङ्ग सिंहव्याघ्रभयानि च ।
वनाग्निधूमसंरोध दिङ्मोहाः संभ्रमा अपि ॥ २८९ ॥

इत्यादि पृथिवीन्द्राणां मृगया व्यसनं स्मृतम् ।
जितश्रमत्वं व्यायाम आममेद कफक्षयः ।
चलस्थिरेषु लक्ष्येषु बाणसिद्धिरनुत्तमा ॥ २९० ॥

मृगयायां ग[गु]णानेतान् प्राहुरन्येन तत्क्षमम् ।
कोप्याः प्राणहराः प्रायस्तत्र तद्व्यसनं महत् ॥ २९१ ॥

श्रमादयोऽपि जायन्तेऽभ्यासेनैव दिवानिशम् ।
चलेऽचलति लक्षे च बाणसिद्धिश्च जायते ॥ २९२ ॥

अथ चेन्मृगयाक्रीडां कामयेन्नगरान्तिके ।
कारयेन्मृगयारण्यं क्रीडाहेतोः मनोरमम् ॥ २९३ ॥

परिमार्जे परिघया दुर्गया मृगगम्यया ।
आयामपरिणाहाभ्यामर्धयोजनसंमितम् ॥ २९४ ॥

गिरेरुपान्ते नद्यां वा पर्याप्तजलशाद्वलम् ।
अकण्टकलतागुल्मं विषपादप[वि]वर्जितम् २९५ ॥

कीडनायातविविधा मृगजातीःप्रवेशयन् ।
अन्यकार्याविरोधेन प्रातश्चङ्क्रमणक्षमः ॥ २९६ ॥

क्रीडनाय विशेद्राजा तदाप्तैः सहितो मतैः ।
यदा तु प्रविशेद्राजा क्रीडनार्थं तदा बहिः ।
संनद्धं हर[परि]तस्तिष्ठेत्सैन्यं दूरात्तु गोचरम् ॥ २९७ ॥

सद्भिर्योमृगया याने गुणः साधुः प्रकीर्तितः ।
क्रीडाप्रीतिर्नरपतिः तत्र तं समवाप्नुयात् ॥ २९८ ॥

विधिरेष समुद्दिष्टो मृगयाक्रीडने बुधैः ।
न गच्छेदन्यथा राजा मृगयां मृगयुर्यतः ॥ २९९ ॥

मृगयाव्यसनात्पाण्डुर्मृत्युमाप महीपतिः ।
निस्सत्यता निष्ठुरता क्रोधो वाक् शस्त्रखण्डनम् ॥ ३०० ॥

लोभो धर्मक्रियालोपः कर्मणामप्रवर्तनम् ।
सज्जनांगमविच्छित्तिरसद्भिः सहवर्तनम् ॥ ३०१ ॥

अर्थनाशः क्रियावश्यं नित्यं वैरानुवृत्तिता ।
सत्यप्यर्थे निराशत्वमसत्यपि च साशता ॥ ३०२ ॥

प्रतिक्षणं क्रोधहर्षौ सन्तापश्च प्रतिक्षणम् ।
प्रतिक्षणमतिक्लेशः साक्षिप्रश्नः प्रतिक्षणम् ॥ ३०३ ॥

अव्यायामोऽङ्गदौर्बल्यं शास्त्रार्थप्रत्यवेक्षणम् ।
गूहनं मूत्रशकृतोः क्षुत्पिपासोपपीडनम् ॥ ३०४ ॥

इत्यादिशास्त्रनिपुणा द्यूतदोषान् प्रचक्षते ।
पाण्डवो धर्मराजश्च लोकपाल इवापरः ॥ ३०५ ॥

द्यूतेन द्विषता विद्वान् कलत्रमपहारितः ।
द्यूतादनर्थसंरम्भो द्यूतादर्थक्षयो महान् ॥ ३०६ ॥

पक्षाणां संहतानां[च]द्यूताद्भेदः प्रजायते ।
इति केवलदोषाढ्यं द्यूतं राजा परित्यजेत् ॥ ३०७ ॥

आह्वयन्तं तु मेधावी दर्पणं विनिवारयेत् ।
कालातिपातः कार्याणां धर्मार्थपरिपीडनम् ॥ ३०८ ॥

नित्याभ्यन्तरवर्तित्वात्साधुप्रकृतिकोपनम् ।
रहस्यभेदस्तत्पक्षादिकार्येषु प्रवर्तनम् ॥ ३०९ ॥

ईर्ष्य[र्ष्या]मर्षस्तथा क्रोधोऽनुरोधः साहसानि च ।
यस्मा[स्या]स्ति व्यसने दोषास्तस्माद्राजा परित्यजेत् ॥ ३१० ॥

स्त्रीमुख्या[खा]लोकनरसव्यग्राणामल्पचेतसाम् ।
समाहितानि गच्छन्ति यौवनेन समं क्षयम् ॥ ३११ ॥

हताः स्त्रीव्यसनेनैव भद्रसेनादयो नृपाः ।
मरणं विह्वलत्वं च संज्ञानाशो विवस्त्रता ॥ ३१२ ॥

बह्वनर्थप्रलापित्वमकस्माद्धसनं मुहुः ।
प्राणग्लानिः सुहृन्नाशः स्मृतिनाशो मतिभ्रमः ॥ ३१३ ॥

सद्भिर्वियोगोऽसद्भिश्च संयोगोऽनर्थसङ्गमः ।
स्खलनं वेपथुस्तन्द्रा भूमौ निद्रामसेवनम् ॥ ३१४ ॥

इत्यादि पानव्यसनं सद्भिरत्यन्तगर्हितम् ।
श्रुतशीलादयोपेताः पानदोषेण भूयसा ॥ ३१५ ॥

क्षयमक्षा[क्षी]णनामानो जग्मुरन्धकवृष्णयः ।
न द्यूतमृगये कार्ये अत्यन्तव्यसने हि ते ॥ ३१६ ॥

कामं स्त्रियं निषेवेत पानं वा साधुमात्रया ।
पूर्वाचार्या[र्य]मतेनेदमुक्तमस्मन्मते पुनः ॥ ३१७ ॥

न कुर्वीत नृपः पानमपि तत्साधुमात्रया ।
गङ्गाम्भो लवणाम्भोधेः सङ्गाद्दुष्टं यथा भवेत् ॥ ३१८ ॥

राज्ञो दुर्बलसङ्गोऽपि व्यसनं स्यान्मतं हि नः ।
यदि स्याद्व्यसनी राजा प्राप्तं राज्यमपि क्षयम् ॥ ३१९ ॥

याति शीघ्रं न चायाति तस्मादव्यसनी भवेत् ।
व्यसनेभ्यः समुद्धर्ता सर्वेषां भूपतिर्भवेत् ॥ ३२० ॥

स तु चेद्व्यसनासक्तो वशं याति रिपोर्ध्रुवम् ।
व्यसनं युवराजस्य जनके दुर्विनीतता ॥ ३२१ ॥

अधिकं स्यान्नृपे प्रोक्तं व्यसनं सर्वमस्य च ।
नानाप्रकारैर्व्यसनैः यो न युक्तो महीपतिः ॥ ३२२ ॥

स यायाद्व्यसनोपेतं शक्तित्रितयसंयुतः ।
शक्तयस्तिस्र एवोक्ताः प्रभावोत्साहमन्त्रजाः ॥ ३२३ ॥

मन्त्रशक्तिर्विचारः स्यादुत्साहश्चोद्यमः स्मृतः ।
प्रभावः कोशदण्डादि त्रयं यस्य सि[स]सिद्धिभाक् ॥ ३२४ ॥

संपन्नसस्यदेशं च परराज्यं व्रजेन्नृपः ।
शत्रोर्वृत्तिच्छिदा स्वस्य सैन्यस्योपचयो यतः ॥ ३२५ ॥

विशुद्धमण्डलो यायाद्विजिगीषुर्नृपः परम् ।
अशुद्धमण्डलःसर्वा[र्वे]न् शीर्ष[र्य]ते रथचक्रवत् ॥ ३२६ ॥

रोचते सर्वलोकेभ्यः शशीवाखण्डमण्डलः ।
संपूर्णमण्डलस्तस्माद्विजिगीषुः सदा भवेत् ॥ ३२७ ॥

अरिमि[मि]त्रप[म]रेर्मि[मि]त्रमिति[त्र]मित्रमतःपरम् ।
तथारिमित्रमित्रं च विजिगीषोःपुरस्थिताः ॥ ३२८ ॥

पार्ष्णिग्राहः स्थितः पश्चादाक्रान्दस्तदनन्तरम् ।
स्वभूम्यनन्तरो राजा पुरस्थोऽरिरिहोच्यते ॥ ३२९ ॥

अर्यनन्तरभूमिस्तु मित्रमित्यभिधीयते ।
तद्भूम्यनन्तरो यस्स्यादरेर्मित्रं स उच्यते ॥ ३३० ॥

तद्भूम्यनन्तरो राजा मित्रमित्रमिहोच्यते ।
तथारिमित्रमित्रं स्यात्तद्भूमेर्यस्त्वनन्तरः ॥ ३३१ ॥

विजिगषोश्च पृष्ठस्थः पार्ष्णिग्राहो नृपो मतः ।
तत्पश्चाद्वर्तमानो यः स आक्रन्दो मतो बुधैः ॥ ३३२ ॥

आसारावलयौ चैव क्रमात्पश्चात्स्थितौ मतौ ।
अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः ॥ ३३३ ॥

अनुग्रहे संहतयोर्व्यस्तयोश्च वधे प्रभुः ।
आहैवं मन्त्रकुशलः चतुष्कं मण्डलं मयः ॥ ३३४ ॥

विजिगीषुररिर्मित्रं पार्ष्णिग्राहोथ मध्यमः ।
उदासीनः पुलोमेन्द्रौ षट्कं मण्डलमूचतुः ॥ ३३५ ॥

उदासीनो मध्यमश्च विजिगीषोश्च मण्डलम् ।
उशना मण्डलमिदं प्राह द्वादशराजकम् ॥ ३३६ ॥

द्वादशानां नरेन्द्राणामरिमित्रं पृथक् पृथक् ।
मौलाद्या दश राजानः अमात्याद्यास्तथापरे ॥ ३३७ ॥

सप्ततिर्व्याधिकास्तेषां सर्वं प्रकृतिमण्डलम् ।
अष्टोत्तरशतं तद्वत् स्यादष्टादशकन्तथा ॥ ३३८ ॥

चतुःपञ्चाशतं तद्वत्स्याच्चतुर्दशकन्तथा ।
एवं मण्डलभेदांश्च मण्डलज्ञाः प्रचक्षते ॥ ३३९ ॥

मित्रोदासीनरिपवः एतन्मात्रं तु मण्डलम् ।
सर्वेऽत्रान्तर्भवन्तीति मतमस्माकमीदृशम् ॥ ३४० ॥

मण्डलं प्रोक्तमधुना तच्छुद्धिरभिधीयते ।
आक्रन्देनात्मना चैव पार्ष्णिग्राहं प्रपीडयेत् ॥ ३४१ ॥

आक्रन्देन तदासारं तथैव वलयेन च ।
मित्रेण चात्मना चैव कुर्वीतोद्धरणं रिपोः ॥ ३४२ ॥

मित्रेण मित्रमित्रेण रिपुमित्रं प्रपीडयेत् ।
अरिमित्रस्य मित्रस्य पीडनं पृथिवीपतिः॥ ३४३ ॥

कुर्वीतोभयमित्रेण मित्रमित्रेण निश्चितम् ।
अनेक[न]क्रमयोगेन विजिगीषुः सदोत्थितः ॥ ३४४ ॥

पीडयेदभितः शत्रुं मित्राणामन्तरान्तरा ।
पीड्यमानोऽह्युभयतः यदोयुक्तैर्मनीषिभिः ॥ ३४५ ॥

रिपुरुच्छेदमायाति तद्वशे चावतिष्ठते ।
सर्वोपायेन कुर्वीत सामान्यं मित्रमात्मसात् ॥ ३४६ ॥

भवन्ति मित्रादुच्छिन्नाः सुखच्छे[द्याश्च]विद्विषः ।
कारणेनैव जायन्ते मित्राणि रिपवस्तथा ॥ ३४७ ॥

रिपवो येन जायेरन् कारणं तत्परित्यजेत् ।
चलेच्चेदूर्जितबलो मध्यमो विजिगीषया ॥ ३४८ ॥

एकीभूयारिणा तिष्ठेदशक्तः सन्धिना नयेत् ।
उदासीनेन चलिते सर्वे मण्डलिनस्तथा ॥ ३४९ ॥

सख्यधर्मेण वर्तेरन् सन्दधुश्चाप्यशक्तयः ।
समुत्पन्नेषु कृच्छ्रेषु संभूयस्त्वात्मसिद्धये ॥ ३५० ॥

आपत्प्रतरणं सम्यक् संख्यधर्म इति स्मृतः ।
यस्मिन्नुच्छिद्यमाने तु रिपुरुग्रः प्रवर्तते ॥ ३५१ ॥

तस्योच्छित्तं न कुर्वीत कुर्वतैनं स्वगोचरम् ।
साक्षरान् रक्षयेदेषां वैपरीत्यं न चाचरेत्(?) ॥ ३५२ ॥

साक्षरा विपरीतास्तु राक्षसा हि यतो मताः ।
मर्मकं पालयेद्यत्नान्नास्य वैमत्यमाचरेत् ॥ ३५३ ॥

दैवादेनमविश्वस्तं हन्यादेवाविचारयन् ।
सहजः कार्यजश्चैव द्विविधश्शत्ररुच्यते ॥ ३५४ ॥

सहजः स्वकुलोत्पन्नः इतरः कार्यजः स्मृतः ।
विभीषणस्य सोदर्यो यथा सूर्यसुतस्य च ॥ ३५५ ॥

सर्वतन्त्रापहारित्वाद्यथोच्छेदो(द्यो) निजो रिपुः ।
छिद्रं मर्म च वीर्यञ्च विजानाति निजो रिपुः ।
दहत्यन्तर्गतश्चैव शुष्कं वृक्षमिवानलः ॥ ३५६ ॥

कर्षणं पीडनं काले विद्यादपचयं तथा ।
उच्छेदं चेति नियतं शत्रुवृत्तिं चतुर्विधाम् ॥ ३५७ ॥

कर्षणं हि विजानीयाद्विनाशं कोशदण्डयोः ।
उत्तमामात्यदहनं पीडनं परिकीर्तितम् ॥ ३५८ ॥

द्विषता निगृहीतस्य बलिनो दुःखितस्य च ।
अपकारो महांस्तस्य धीरैरप[च]यो मतः ॥ ३५९ ॥

समाश्रयविहीनस्य दुर्बलाश्रयिणस्तथा ।
स्थानभ्रष्टस्य नृपतेः वध उच्छेद उच्यते ॥ ३६० ॥

वशं गतो रिपुर्यस्तु विचलेद्दुरुपग्रहः ।
तस्य सङ्गमनायाशु तत्कुलीनं विकारयेत् ॥ ३६१ ॥

विषं विषेण बाध्येत वज्रं वज्रेण बाध्यते ।
गजो गजेन बाध्येत मायी बाध्येत मायिना ॥ ३६२ ॥

मूर्खो मूर्खेण बाध्येत पण्डितेनैव पण्डितः ।
शठः शठेन बाध्येत कण्टकेनैव कण्ठकः ॥ ३६३ ॥

खलः खलेन बाध्येत ज्ञातिर्ज्ञातिजनेन च ।
रावणोच्छित्तये रामो विभीषणमपूजयत् ॥ ३६४ ॥

यस्मिन्मण्डलसंक्षोभः कृते भवति कर्मणि ।
तन्न कुर्यात्तु मेधावी प्रकृतीरनुरञ्जयन् ॥ ३६५ ॥

साम्ना दानेन भेदेन प्रकृतीरनुरञ्जयन् ।
आत्मीयान्भेददण्डाभ्यां परकीयांस्तु वारयेत् ॥ ३६६ ॥

प्राप्तभोगं विकुर्वाणं मित्रमप्युपपीडयेत् ।
अत्यन्तविकृतं हन्यात् स पापीयानरिर्यतः ॥ ३६७ ॥

अमित्राण्यपि कुर्वीत मित्राण्युपचयाय च ।
अहिते वर्तमानानि मित्राण्यपि परित्यजेत् ॥ ३६८ ॥

अनुरक्तं विरक्तं वा तन्मित्रमुपकारि यत् ।
मित्रं विचार्य बहुशो ज्ञातदोषं परित्यजेत् ॥ ३६९ ॥

त्यजन्नकृतदोषन्तु धर्मार्थावुपहन्ति सः ।
स्वयं दोषगुणान्ये[न्वे]षी भवेत्सर्वत्र सर्वदा ॥ ३७० ॥

स्वयं ज्ञातेषु[दोषेषु] शस्यते दण्डपातनम् ।
न त्वविज्ञाय तत्त्वेन दोषं कुप्येत्कथंचन ॥ ३७१ ॥

भुजङ्गमिव मन्यन्ते निर्दोषक्रोधनं जनाः ।
न च मिथ्याभियोगःस्याच्छृणुयाच्चापि तद्विधम् ॥ ३७२ ॥

मित्रभेदं च ये कुर्युः समस्तांस्तान्परित्यजेत् ।
प्रायोगिकान् मात्सरिकान् मध्यस्थान्प(त्प)क्षपातिकान् ॥ ३७३ ॥

सोपान्यासान्सानुशयान् ज्ञात्वा कार्यं समाचरेत् ।
कार्यस्यातिगरीयस्त्वान्नीचानामपि कालवित् ॥ ३७४ ॥

सतोऽपि दोषान् प्रच्छाद्य गुणानस्य सतो वदेत् ।
प्रायोमित्राणि कुर्वीत सर्वावस्थासु भूपतिः ॥ ३७५ ॥

बहुमित्रो हि शक्नोति रणे तापयितुं रिपुम् ।
न तत्र तिष्ठति प्रायो भ्राता नान्योऽपि वा जनः ॥ ३७६ ॥

पुंसामापत्प्रतीकारः सन्मित्रं यत्र तिष्ठति ।
एषां मण्डलशुद्धिश्च पूर्वाचार्यैकसम्मता ॥ ३७७ ॥

अमित्रान् सर्वतो मित्रैः न गृह्णीयाद्दृढव्रतैः ।
एषां मण्डलशुद्धिः स्यादिति ब्रूमो वयं पुनः ॥ ३७८ ॥

विशुद्धमण्डलो राजा राजमानः सुधांशुवत् ।
यातव्याय प्रहिणुयात् दूतं दूत्येषु पूजितम् ॥ ३७९ ॥

प्रगल्भः स्मृतिमान्वाग्मी शस्त्रे शास्त्रे च निष्ठितः ।
अभ्यस्तकर्मा नृपतेः यू[दू]तो भवितुमर्हति ।
स भर्तुः शासनाद्गच्छेद्वक्तव्यं ह्युत्तरोत्तरम् ॥ ३८० ॥

स्ववाक्यपरवाक्यानामिति चेति च चिन्तयन् ।
सारवत्तां च राष्ट्रस्य दुर्गं तद्गुप्तिमेव च ॥ ३८१ ॥

छिद्रं शत्रोर्विजानीयात्कोशदण्डबलानि च ।
प्रतीक्ष[क्ष्या]ल्पमपि च्छिद्रं तद्द्वारा रिपुमाविशन् ॥ ३८२ ॥

तत्पक्षं नाशयेत्तावदामपात्रमिवोदकम् ।
उद्यतेष्वपि शस्त्रेषु यथोक्तं शासनं वदेत् ॥ ३८३ ॥

रागापरागौ जानीयाद्दृष्टिवक्त्रविचेष्टितैः ।
सहेतानिष्टवचनं कामं क्रोधं च वर्जयेत् ॥ ३८४ ॥

नान्यैः शयीत भावं स्वं रक्षेद्विद्यात्परस्य च ।
रागापरागौ जानीयात्प्रकृतीनां च भर्तरि ॥ ३८५ ॥

पृच्य[च्छ्य]मानोऽपि न ब्रूयात् स्वस्वामिप्रकृतिच्युतिम् ।
प्रतापं कुलमैश्वर्यं त्यागमुत्थानसौष्ठवम् ॥ ३८६ ॥

अक्षुद्र(णं) रक्षणं चैव भर्तृभेदेषु कीर्तयेत् ।
भावमन्तर्गतं व्यक्तं सुप्तो मन्त्रं च भाषते ॥ ३८७ ॥

तस्मादेकः स्वपेन्नित्यं द्यूतं पानं च वर्जयेत् ।
रिपोः शत्रुपरिच्छेदः सुहृद्बन्धुविभेदनम् ॥ ३८८ ॥

दुर्गकोशबलज्ञानं कृत्यपक्षोपसङ्ग्रहः ।
राष्ट्रारण्यान्तपालानामात्मसात्करणं तथा ॥ ३८९ ॥

दुर्गादिसारभूज्ञानं दूतकर्मेति कीर्तितम् ।
दूतैरेव नरेन्द्रस्तु कुर्वीतारिविमर्शनम् ॥ ३९० ॥

स्वपक्षे च विजानीयात्परदूतविचेष्टितम् ।
तपस्विलिङ्गिनो धूर्ता शिल्पपण्योपजीविनः ॥ ३९१ ॥

चराश्चरेयुः परितः पिबन्तो जगतां मतम् ।
निर्गच्छेयुर्विशेयुश्च सर्ववार्ताविदोऽन्वहम् ॥ ३९२ ॥

चराः सकाशं नृपतेः चक्षुर्दूरतरं हि ते ।
स्वपन्नपि हि जागर्ति चारचक्षुर्महीपतिः ॥ ३९३ ॥

चारहीनो हि नृपतिः पश्यन्नपि न पश्यति ।
प्रकाशश्चाप्रकाशश्च चरस्तद्द्विविधः स्मृतः ॥ ३९४ ॥

अप्रकाशोऽयमुदितः प्रकाशो दूत उच्यते ।
जडमूकान्धबधिर छद्मिनः षण्डकास्तथा ॥ ३९५ ॥

किराता वामनाः कुब्जास्तद्विधा ये च कारवः ।
भिक्षुकाश्चारणा दास्यो मालाकार्यः कलाविदः ॥ ३९६ ॥

अतः[न्तः]पुरगतां वार्तामाहरेयुरलक्षिताः ।
छत्रव्यञ्जनभृङ्गारयानवाहनधारिणः ॥ ३९७ ॥

महामात्रबहिर्वार्ता विद्युरन्येन[च] तद्विधाः ।
स्वाद्यव्यञ्जनकर्तारो भोजकाः स्वापकास्तथा ॥ ३९८ ॥

प्रसाधिकाः कन्यकाश्च गात्रसन्नाहिका अपि ।
जलताम्बूलकुसुमगन्धभूषणदायकाः ॥ ३९९ ॥

कर्तव्या रक्षदा ह्येते ये चान्येऽभ्याशवर्तिनः ।
अन्वहं चरचर्याभिर्विफले दूतचेष्टिते ॥ ४०० ॥

ततो दैवबलं यत्तु षट्कर्माणि च यानि तु ।
सर्वाश्चौषधयो यास्तु चातुरङ्गस्य सूचनम् ॥ ४०१ ॥

स्वराणामुदयो यस्तु हंसचारश्च यत्पुनः ।
छत्रचक्रत्रवं(यं) तद्वच्छकर्ति(सिं)हासनस्य यत् ॥ ४०२ ॥

सर्वतोभद्रचक्रं च चक्रं शतपदं तथा ।
राहुकालानलं चक्रं चूडं कालानलं तथा ॥ ४०३ ॥

चतुर्दशाङ्गचक्रं च हस्तिचक्रं च यत्पुनः ।
रथचक्रं हयचक्रं नरचक्रं तथैव च ॥ ४०४ ॥

चापचक्रं खड्गचक्रं छुरिकाचक्रमेव च ।
कुन्दचक्रं च संघट्टं चक्रं लोहस्य पातनम् ॥ ४०५ ॥

भूबलं योगिनीनां यद्बलं सर्वत्र सङ्गरे ।
कौटचक्रं च यत्तावत् कविसञ्चारचक्रकम् ॥ ४०६ ॥

यायाज्जयाय नृपतिः ज्ञात्वैतानि विशेषतः ।
**जयचिन्तामणौ** सर्वं सप्रपञ्चमुदीरितम् ॥ ४०७ ॥

एतेषां लक्षणं तस्मादस्माभिर्नैव तन्व[न्य]ते ।
शकुनि[ना]न्यनुकूलानि दृष्ट्वा यायानृ[यान्नृ]पो बली ॥ ४०८ ॥

दृष्ट्वा च प्रतिकूलानि बलवानपि न व्रजेत् ।
दाक्षायाबन्धने हस्ती यदा गर्जति मेघवत् ॥ ४०९ ॥

भर्तानीतिग्रहस्तश्च यात्राकाले जयं दिशेत् ।
भूमौ पतितशस्त्राणि स्वा(य)मेवार्पयेद्यदि ॥ ४१० ॥

शत्रुबन्धनकाले तु तदा सञ्जायते जयः ।
कटस्थलं दक्षिणाङ्गं दशनं वा परिस्पृशेत् ॥ ४११ ॥

हस्तेन कुञ्जरो यत्र तत्र राज्ञो जयः स्मृतः ।
दुर्गन्धिमदयुक्तश्चेत्सुगन्धिमदसंयुतः ॥ ४१२ ॥

अमदश्च मदं नागो द[ध]त्ते चेज्जायते जयः ।
चलिते कुञ्जरे पूर्वं द्विपघण्टास्वनो यदि ॥ ४१३ ॥

भवेद्वारणनाथस्य तत्राद्भुतजयं दिशेत् ।
गु[गो]पुरस्थकवाटस्य दलनं कुरुते गजः ॥ ४१४ ॥

मत्तो वा मदहीनो वा तदा तत्र जयो भवेत् ।
भिनत्ति कुञ्जरो हृष्टः सान्द्रशुष्कं च शाखिनम् ॥ ४१५ ॥

यदा प्रयाणसमये तदा राज्ञो जयो भवेत् ।
नगराभिमुखं शत्रोर्वार्यमाणोऽपि चेद्गजः ॥ ४१६ ॥

पदानां विंशतिं याति तत्रापि विजयो मतः ।
अनर्दिता गजा नादं मृदङ्गध्वनिवद्यता[दा] ॥ ४१७ ॥

कुर्वन्ति विजयं राजा रा[या]त्रायां लभते य(त)दा ।
हंसक्रौञ्चध्वनिनिभं यदा नादं मतङ्गजः ॥ ४१८ ॥

त्रिवारं कुरुते राज्ञः तदातीव जयो भवेत् ।
सेनामध्ये यदा नागो हृष्टः शार्दूलनादवत् ॥ ४१९ ॥

बृंहितं कुरुते राज्ञः स्वसैन्यविजयस्तदा ।
मुखरन्ध्रकरो नागः कर्णेनध्वघनवध्वनिम् ॥ ४२० ॥

प्रहृष्टः कुरुते यत्र जायते तत्र वै जयः ।
कुर्वन्ति निस्वनं नागाः कलहंसस्वनोपमम् ॥ ४११ ॥

पुष्करं किञ्चिदुत्क्षिप्य यदा नृपजयस्तदा ।
द्रुतं गृहीत्वा सलिलं यत्र नादं सशीकरम् ॥ ४२२ ॥

करोति कुञ्जरस्तत्र सुखेन रिपुसङ्क्ष[ङ्क्ष]यः ।
विधृत्य दशने हस्तं शङ्खवाजिस्वनोपमम् ॥ ४२३ ॥

कुरुते कुञ्जरो नादं यदा भर्तुः जयस्तदा ।
बृंहितं मुखरन्ध्रोत्थं कपोलगतमुत्तमम् ॥ ४२४ ॥

असकृत्कुरुते नागो यदि राजा जयी तदा ।
कबलं करिणीहस्तादगृहीत्वा भक्षयेद्यदा ॥ ४२५ ॥

चीत्कारपूर्वकं नागस्तदा स्वबलसंक्षयः ।
गजो मोच (भोज)नकाले तु हस्तेनालिङ्गय बन्धनम् ॥ ४२६ ॥

गन्तुं नेच्छति यात्रायां तदा तत्राजयो विभोः ।
जघनोदरमेढ्राणि यदा स्पृशति वारणः ॥ ४२७ ॥

करेण यात्रासमये तदा शत्रुर्ज(ज)यी भवेत् ।
अकस्मान्मत्तमातङ्गो मदमुक्तो भवेद्यदि ॥ ४२८ ॥

प्रयाणसमये भर्तुर्न नश्यति रिपुस्तदा ।
श्वसन्दीनमुखो हस्तैर्गात्ररन्ध्रे पुनः पुनः ॥ ४२९ ॥

सङ्गृह्य पांसु क्षिपति तदा भङ्गो महीपतेः ।
मुखकण्ठविधूतेन पातयित्वा च हस्तिपम् ॥ ४३० ॥

दीर्घचीत्कारकृन्नागो याति चेन्न जयस्तदा ।
किय(च्चि)द्दूरं गजो गत्वा कपोलाहतपुष्करः ॥ ४३१ ॥

व्यावर्तते यदाकस्मात्तदा भर्तुः पराजयः ।
शुष्ककाष्ठतृणाङ्गारकण्टकाश्मास्थिभूमिषु ॥ ४३२ ॥

श्मशानेऽपि स्थिता नागा न च[न]दन्तो जयप्रदाः ।
शङ्कासंविग्ननयनो वारणो घृणिवद्ध्वनिम् ॥ ४३३ ॥

करोति यत्र तत्र स्यान्नृपतः सैन्यसंक्षयः ।
भूतले विस्तृतकरो यदा गर्जति वारणः ॥ ४३४ ॥

धराकम्पध्वनिनिभं तदा राज्ये रिपोर्भयम् ।
प्रमत्तकरभस्वानसमानं यदि गर्जति ॥ ४३५ ॥

सङ्ग्रामकल्पितो हस्ती चीत्कारं परुषं यदि ।
करोति भून्यस्तकरः तदा भर्तुः पराजयः ॥ ४३६ ॥

गजो झर्झरनादश्चेद्जस्रं सन्ध्ययोर्भवेत् ।
गृहीत्वा हस्तिपं याति शीघ्रमेव यमालयम् ॥ ४३७ ॥

मुखरन्ध्रं समाघ्राय यदा बृंहति दुःसहम् ।
मतङ्गजस्तदाघातजातं स्याद्भूपतेर्भयम् ॥ ४३८ ॥

भूमौ निवेश्य शिथिलं कुञ्जरो वलितं करम् ।
निमीलिताक्षो निनदेद्यत्र तत्र प्रभोर्म[मृ]तिः ॥ ४३९ ॥

ध्वजानि सुप्रसन्नानि जयदानि पदे पदे ।
अनिभ(म)म्रानि यच्छन्ति नृपाणामशुभं (शुभम्) ध्रुवम् ॥ ४४० ॥

वाद्यध्वनिं समाकर्ण्य हेषन्ते यदि वाजिनः ।
ग्रासपूर्णमुखाश्चैव तदा भर्तुर्जयो भवेत् ॥ ४४१ ॥

दृष्ट्वाग्निं पूर्णपात्रञ्च ब्राह्मणं कुसुमानि च ।
दधि चापि समालोक्य वाहानां हेषितं शुभम् ॥ ४४२ ॥

ध्वजाग्रं चैव(सू)मूर्यं च पश्यन्तो यदि वाजिनः ।
हेषन्ते बहवो हृष्टास्तदा विद्याज्जयं विभोः ॥ ४४३ ॥

यदा व्याधिं विना वाजी ग्रासं त्यजति दुर्मनाः ।
अश्रुपातञ्च कुरुते तदा भर्तुरशोभनम् ॥ ४४४ ॥

विकिरन्ति यदात्यर्थं सर्वे पुच्छं तुरङ्गमाः ।
अकस्माद्दन्तप[घा]तञ्च तेषां भीतिः प्रमादतः ॥ ४४५ ॥

अकस्मात्तुरगो मूढो निरुत्साहश्च भीतिमान् ।
यदि वा मन्दगामी स्यात्तदा तत्र पराजयः ॥ ४४६ ॥

प्रहृष्टमनसः सर्वे प्रयाणे यदि पत्तयः ।
तदा भर्तुर्जयं विद्याद्वैपरीत्ये पराजयः ॥ ४४७ ॥

देदीप्यते यदा शस्त्रसङ्घातो वर्म चोज्ज्वलम् ।
तदा भर्तुर्जयं विद्याद्वैपरीत्ये पराजयः ॥ ४४८ ॥

श्रूयते यत्र वाद्यानां निनादो हि शुभावहः ।
तत्र राजा रिपून्सर्वान् द्रुतं विजयते ध्रुवम् ॥ ४४९ ॥

वाद्यानां निस्वनो यत्र श्रूयते न हि शोभनः ।
न जायते नरपतेर्विजयस्तत्र निश्चितम् ॥ ४५० ॥

श्रूयते त[य]त्र यात्रायामकस्मान्मङ्गलध्वनिः ।
दर्शनं मङ्गलानां च विजयं तत्र निर्दिशेत् ॥ ४५१ ॥

श्रूयते यदि यात्रायामकस्मादशुभध्वनिः ।
दृश्यते चाशुभं यत्र भवेत्तत्र पराजयः ॥ ४५२ ॥

शीघ्रं यतेत विजये निमित्ते जयसूचके ।
पराजयनिमित्ते तु यत्नः शान्तिपुरःसरः ॥ ४५३ ॥

सचिवः पृष्ठदेशे स्यादग्रे सेनापतिः स्मृतः ।
पार्श्वयोराप्तवीराः स्युः मध्ये यायान्नृपो बली ॥ ४५४ ॥

वि(नि)गृह्य सन्धाय तथा संभूयाथ प्रसङ्गतः ।
उपेक्ष्य चेति निपुणैर्यानं पञ्चविधं स्मृतम् ॥ ४५५ ॥

स्वमित्रैररिमित्रादीन् निगृह्य गमनं हि यत् ।
रिपुं प्रति तदाख्यातं विगृह्यगमनावि[मि]षम् ॥ ४५६ ॥

सन्धाय वैरिभिः सार्धं सुसन्नद्धो जितश्रमः ।
गच्छेद्यच्छत्रुमुद्दिश्य संधायगमनं हि तत् ॥ ४५७ ॥

अन्यसैन्यं समादाय सुविचिन्त्य फलोदयम् ।
व्रजेच्च द्विषमुद्दिश्य संभूयगमनं हि तत् ॥ ४५८ ॥

अन्यत्र दैव(व्रज)तो दैवादुव्रजत्यन्यत्र यत्पुनः ।
प्रसङ्गयानं तत्प्रोक्तमत्र शल्यो निदर्शनम् ॥ ४५९ ॥

रिपुं यातस्य बलिनः संप्राप्यारिकृतं बलिम् ।
उपेक्ष्य तन्मित्रयानमुपेक्षायानमुच्यते ॥ ४६० ॥

निवातकवचान् हत्वा हिरण्यपुरवासिनः ।
उपेक्षायानमास्थाय निजघान धनञ्जयः ॥ ४६१ ॥

सप्रपञ्चं यानमुक्तमधुनासनमुच्यते ।
परस्परस्य सादृश्य(मन्य)विघातादासनं स्मृतम् ॥ ४६२ ॥

यानवत्तत्पञ्चविधमुच्यते तस्य लक्षणम् ।
यदा दुर्गस्थितः शत्रुर्ग्रहीतुं नैव शक्यते ॥ ४६३ ॥

विगृह्यैनं तदासीत छिन्द्यादासारवीवधौ ।
विच्छिन्नवीवधासारं प्रक्षीणयवसेन्धनम् ॥ ४६४ ॥

विगृह्यमाणप्रकृतिं कालेनैव वशं नयेत् ।
अरेश्च विजिगीषोश्च विग्रहे हीयमानयोः ॥ ४६५ ॥

मन्दा[य]वयवसं स्थानं सन्धायासनमुच्यते ।
संभूयासनमास्थानं प्रीत्योदासीनमध्ययोः ॥ ४६६ ॥

प्रसङ्गासनमन्यत्र गच्छतोऽन्यत्र संस्थितिः ।
उपेक्ष्य बलिनं तिष्ठेत् उपेक्षासनमीरितम् ॥ ४६७ ॥

उपेक्षां कृतवानिन्द्रः पारिजातग्रहं प्रति ।
न च संपद्यते तावत् स्कन्धवारं विनासनम् ॥ ४६८ ॥

अनित्यासनसिद्ध्यर्थं स[्क]न्धावारं प्रचक्षते ।
तन्मूलत्वात् प्रजानां हि राजा स्कन्ध इति स्मृतः ॥ ४६९ ॥

आवारोऽमात्यदण्डादिवृतिरावारमुच्यते ।
यत्र तैरावृतः स्कन्ध स्कन्धावारस्ततस्स्मृतः ॥ ४७० ॥

उत्तमां कल्पयेद्भूमिं स्कन्धावार[राय]नीतिवित् ।
तदलाभे मध्यमां वा नाधमान्तु कदाचन ॥ ४७१ ॥

यस्मिन्देशे यथाकामं सैन्यव्यायामभूमयः ।
परस्य विपरीताश्च स्मृतो देशस्स उत्तमः ॥ ४७२ ॥

आत्मनश्च परेषां च तुल्यव्यायामभूमयः ।
यत्र मध्यम उद्दिष्टो देशश्शास्त्रानुचिन्तकैः ॥ ४७३ ॥

अराति सैन्यव्यायामायापर्याप्तमहीतलः ।
आत्मनो विपरीतश्च यस्स देशोऽधमः स्मृतः ॥ ४७४ ॥

चतुरश्रं चतुर्द्वारं नातिविस्तारसङ्कटम् ।
साट्टप्रतोलिप्राकारं महाखातसमावृतम् ॥ ४७५ ॥

शृङ्गाटमर्धचन्द्रं वा मण्डलं दीर्घमेव वा ।
भूमिप्रते(दे)श सामिथ्याना(त्यमा)कारमुपकल्पयेत् ॥ ४७६ ॥

तस्य मध्ये मनोह्लादि महामौलबलान्वितम् ।
अन्तःकोशगृहोपेतं कारयेद्राजमन्दिरम् ॥ ४७७ ॥

बलहीनो हि नृपतिः स्व[श्व]सन्नपि न जीवति ।
राज्ञो यस्माद्बलं प्राणास्तस्मात्कुर्याद्बलान्वितम् ॥ ४७८ ॥

सदेहोऽपि विदेहस्स्यात्कोशहीनस्तु यो नृपः ।
राज्ञः कोशो वपुस्तस्मात्कुर्यात्कोशसमन्वितम् ॥ ४७९ ॥

मौलं भृतं श्रेणिसुहृद्द्विषदाटविकं बलम् ।
राजहर्म्यं समावृत्या[त्य] क्रमेण विनिवेशयेत् ॥ ४८० ॥

आप्ता विशेयुरावृत्य स्वामिनं बहिरन्त्यजाः ।
अप्राप्तवेदाः क्रूराश्च शत्रुतुल्या मताः खलाः ॥ ४८१ ॥

अन्तर्बहिश्च न स्थाप्याः कदाचिदपि धीमता ।
युद्धयोग्यो महादन्ती सन्नद्धः साध्वधिष्ठितः ॥ ४८२ ॥

तिष्ठेन्नरपतेर्द्वारि वेगवांश्च तुरङ्गमः ।
प्रतियामं सुसन्नद्धं रात्रिन्दिवमुदायुधम् ॥ ४८३ ॥

अन्तर्वासिकसैन्यञ्च तिष्ठेद्राजाभिगुप्तये ।
प्रहृष्टनरनारीकः प्रशस्तस्वनदुन्दुभिः ॥ ४८४ ॥

गम्भीरहेषितहयः प्रशस्तद्विपबृंहितः ।
पुण्याहब्रह्मघोषाढ्यो नृत्तगीतसमाकुलः ॥ ४८५ ॥

हृष्टपुष्टजनस्साधुः सुगन्धिर्ज्वलितानलः ।
प्रमत्तमाद्यन्मातङ्ग आसाराभ्यागतान्वितः ॥ ४८६ ॥

इत्यादिलक्षणोपेतः स्कन्धावारः प्रशस्यते ।
शुभाशुभानि चिह्नानि यानि यात्रोदितानि तु ॥ ४८७ ॥

स्कन्धावारेषु युद्धे च विज्ञेयानि मनीषिभिः ।
स्कन्धावारं विरच्यैवं तत्रैवासीत भूपतिः ॥ ४८८ ॥

आसनं प्रोक्तमधुना द्वैधीभावोऽभिधीयते ।
बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् ॥ ४८९ ॥

द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ।
यापयेद्व्यक्तमास्थाय सन्निकृष्टतरं तयोः ॥ ४९० ॥

उभयोरपि सङ्घाते सेवेत बलवत्तरम् ।
यदा द्वावपि नेच्छेतां संसर्गाज्जातसंविदौ ॥ ४९१ ॥

तत्रोपसर्पेत्तच्छत्रुमधिकं चापि संश्रयेत् ।
स्वतन्त्रः परतन्त्रश्च द्वैधीभावो द्विधा भवेत् ॥ ४९२ ॥

स्वतन्त्रः कथितोऽन्यस्तु यः स्यादुभयवेत[भेद]नः ।
द्वैधीभावश्च संप्रोक्तः संश्रयोऽप्यधुनोच्यते ॥ ४९३ ॥

उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः ।
कुलोन्नतं सत्यमार्यं संश्रयेत बलोत्कटम् ॥ ४९४ ॥

तद्दर्शनोपासकता नित्यं तद्भावभविता ।
तत्कारिता प्रश्रयिता वृत्तं सश्रयिणः स्मृतम् ॥ ४९५ ॥

विनीतवत्तत्र कालं गमयित्वा गुराविव ।
तत्सङ्गापरिपूर्णस्सन् क्रमेण स्ववशो भवेत् ॥ ४९६ ॥

ददद्बलं वा कोशं वा भूमिं वा भूतिसम्भवाम् ।
आश्रयेदभियोक्तारं विसन्धिरनपाश्रयम् ॥ ४९७ ॥

सर्वाणि चैनान्यार्तः सन् दद्यात्त्राणार्थमात्मनः ।
पृथिवीपतिराप्नोति पुनर्जीवन्वसुन्धराम् ॥ ४९८ ॥

कथिताः षड्गुणाः सम्यक्तेषु निश्चितबुद्धिमान् ।
मन्त्रार्थकुशलो राजा स्वका[र्यं] युद्धमाचरेत् ॥ ४९९ ॥

अवशिष्टं तु यन्नोक्तं नीतिशास्त्रोक्तमन्त्रतः ।
अस्मत्कृते तु ज्ञातव्यं **नीतिकल्पन[ल]ता**भिधे ॥ ५०० ॥

**आचारचिन्तामणि**नाचारोऽस्माभिः प्रपञ्च[ञ्चि]तः ।
नृपतीनां यतस्तस्मादत्र ग्रन्थे न कथ्यते ॥ ५०१ ॥

ब्रह्मविद्याधिकारित्वं **राज्ञामद्वै**[द्वै]तदर्पणे ।
प्रतिपादितमस्माभिस्तस्मान्नेह प्रशस्यते ॥ ५०२ ॥

अत्र प्रोक्तेऽर्थसंघाते यद्युद्धायोपयुज्यते ।
तद्वेदितव्यं सङ्ग्रामपरिच्छेदेऽपि धीमता ॥ ५०३ ॥

इति श्रीमन्महाराजाधिराजगजपतिप्रतापरुद्रदेवस्वहस्तधारितकनककेसरिचतुष्टयावेष्टित-
शातकुम्भमयकुम्भसंभृतमेघाडंबराभिधानसितातपत्रशोभमानकविपुङ्गव-
पण्डितराजराजगुरुवाजपेययाजिमन्त्रिवरगोदावरमिश्रविरचिते
हरिहरचतुरङ्गे षष्ठो नीतिपरिच्छेदः ॥

---

## ॥ युद्धपरिच्छेदः ॥



चतुरङ्गादयः सर्वे युद्ध एवोपयोगिनः ।
निरूप्यते ततो युद्धं तज्ज्ञानाय यथाक्रमम् ॥ १ ॥

समालोच्य पुराणानि धर्मशास्त्राणि भारतम् ।
लिख्यते सारभूतार्थः पूर्वं प्राशस्त्यमुच्यते ॥ २ ॥

राज्ञां युद्धसमा नास्ति गतिः श्रेष्ठेह भूतले ।
राज्यं लभन्ते जित्वारीन् मृते स्वर्गं तथाक्षयम् ॥ ३ ॥

धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ।
उवाच पार्थं भगवानेवं युद्धे ह्युपस्थिते ॥ ४ ॥

विजित्य समरे शत्रून् महीपतिरकण्टकाम् ।
ससागरां धरां भुङ्क्ते लभते कीर्तिमुत्तमाम् ॥ ५ ॥

यानि दुःखानि सहते क्षत्रियो युधि तापितः ।
न ततोऽस्ति तपो भूय इति धर्मविदो विदुः ॥ ६ ॥

ब्राह्मणानां यथाधर्मो दानमध्ययनं तपः ।
क्षत्रियाणां तथैव स्यात्समरे देहपातनम् ॥ ७ ॥

तथा विजित्य समरे योद्धारः परवाहिनीम् ।
धर्मं धनं यशस्सौख्यमतुलं प्राप्नुवन्ति हि ॥ ८ ॥

गृह्णाति यदि राष्ट्राणि य(त)दा च हरते धनम् ।
यदि वध्येत तत्रैव स नृपः स्वर्गमाश्रितः ॥ ९ ॥

समुद्दिश्य तथा शत्रूनभितो विकिरेच्छरान् ।
श्रेयनैतादृशं देवाभूद्विपश्यन्ति किञ्चन ! ॥ १० ॥

यस्य यावन्ति शा[श]स्त्राणि त्वंच[त्वचं] भिन्दन्ति संयुगे ।
तावदेशो[षो]ऽश्नुते लोकान् सर्वकामदुहोऽक्षमा[या]न् ॥ ११ ॥

यदस्य रुधिरं गात्रादाहवेषु प्रवर्तते ।
सह तस्यैव पातेन सर्वपापैः प्रमुच्यते ॥ १२ ॥

क्षतेभ्यः प्रस्रुतं रक्तं यावत्पांसुस्त(सूं स्तु) संस्पृशेत् ।
स देवलोक(के)तावन्तं कालं तिष्ठति वै चिरम् ॥ १३ ॥

ललाटदेशे रुधिरं स्रवदाद्यं[स्यं] विशेद्यदि ।
सोमपानफलं तस्य युद्धयज्ञविधौ मतम् ॥ १४ ॥

अविक्षतेन देहेन समराद्यो निवर्तते ।
क्षत्रियस्य न तत्कर्म प्रशंसन्ति पुराविदः ॥ १५ ॥

यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः ।
अक्षयान् लभते लोकान् यदि क्लैम्बं[ब्यं] न गच्छति ॥ १६ ॥

ये हता नि हि[शि]तैश्शस्त्रैः क्षत्रधर्मपरायणाः ।
ते गता ब्रह्मसदनं नात्र कार्या विचारणा ॥ १७ ॥

सुखः सङ्ग्रामिको मृत्युः क्षत्रधर्मेण युध्यते ।
मृते दुःखं न जानीते प्रेत्य चानन्त्यमश्नुते ॥ १८ ॥

न हि कर्मास्थि[स्ति] पापीयः क्षत्रियस्य पलायनात् ।
न युद्धधर्माश्रे[च्छ्रे]यान्हि पन्थाः स्वर्गस्य विद्यते ॥ १९ ॥

यदा भीरुं च शूरं च मारयत्यन्तकः सदा ।
कोऽत्र मूढो न युध्येत पुरुषः क्षत्रियो ध्रुवम् ॥ २० ॥

प्राणान् जहाति यो वीरो युधि पृष्ठमदर्शयन् ।
इह कीर्तिं समास्थाय प्रेत्य लोकान्समश्नुते ॥ २१ ॥

तीर्थं तीर्थं हि सर्वेषां ज्ञानं तीर्थं हि योगिनाम् ।
शस्त्रं तीर्थं नृपाणां स्याद्धर्मशास्त्रेष्वयं विधिः ॥ २२ ॥

विजयं लभते लक्ष्मीं मरणे च सुराङ्गनाः ।
क्षणध्वंसिनि कायेऽस्मिन् का चिन्ता मरणे रणे ॥ २३ ॥

यथार्थं क्षत्रियो युद्धे स्वान् प्राणान् संपरित्यजेत् ।
अश्वमेधफलं कृत्स्नं निसर्गेणाधिगच्छति ॥ २४ ॥

न यज्ञैर्दक्षिणाभिर्न न तपोभिर्न विद्यया ।
स्वर्गं यान्ति तथा मर्त्या यथा योधा रणे हताः ॥ २५ ॥

द्वावेतौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राट् योगयुक्तश्च रणे चाभिमुखो हतः ॥ २६ ॥

यदि(नीति)चिन्तामणावुक्तं भानुमण्डलभेदिनः ।
फलं समग्रतोऽस्याभिर्ज्ञातव्यं तत्र पण्डितैः ॥ २७ ॥

वराप्सरस्सहस्राणि शूरमायोधने हतम् ।
अभिद्रवन्ति कामार्ता मम भर्ता भविष्यति ॥ २८ ॥

संग्रामं हृष्टमनसो ये प्रयान्ति रिपून्प्रति ।
देवराजस्य ते लोकान् गतास्ते सत्यविक्रमाः ॥ २९ ॥

ये त्व(तु)हृष्टेन मनसा कर्तव्यमिति योधिनः ।
युध्यमाना हता वीराः सर्वे गन्धर्वलोकिनः ॥ ३० ॥

ये तु सङ्ग्रामशिरसि युध्यमानाः पराङ्मुखाः ।
शस्त्रेण निधनं प्राप्ता दिवि ते गुह्यकैस्सह ॥ ३१ ॥

ये तत्र निहतास्तावन्नन्तरायोधनं पुनः ।
यथा कथञ्चित्ते सर्वे संप्राप्तास्तूत्तरान् कुरून् ॥ ३२ ॥

ब्राह्मणस्त्रिषु वर्णेषु शस्त्रं गृह्णन्न दुष्यति ।
आत्मत्राणे वर्णलोपे दुर्गाणां रक्षणेषु च ॥ ३३ ॥

न हि शौर्यात्परं किञ्चित्त्रिषु लोकेषु विद्यते ।
शूरः सर्वं पालयति सर्वं शूरे प्रतिष्ठितम् ॥ ३४ ॥

शूरबाहुषु लोकोऽयं लम्बते पुत्रवत्सदा ।
तस्मात्सर्वास्ववस्थासु शूरः संमानमर्हति ॥ ३५ ॥

अपारे यो भवेत्पारो यत्प्रतापाच्च भज्यते ।
शूद्रो वा यदि वाप्यन्यः सर्वथा मानमर्हति ॥ ३६ ॥

यस्तु सैन्येषु भग्नेषु पुरो व्यावर्तते युधि ।
पदे पदेऽश्वमेधस्य लभते फलमक्षयम् ॥ ३७ ॥

यस्तु भग्नेषु सैन्येषु विद्रवत्सु समन्ततः ।
युधि गच्छेत्परित्रातुं सोऽपि क्रतुफलं लभेत् ॥ ३८ ॥

योऽमात्यं वा प्रधानं वा योऽन्यं वा राजपूजितम् ।
जीवग्राहं प्रगृह्णाति शक्रलोकमवाप्नुयात् ॥ ३९ ॥

यस्तु सेनापतिं हत्वा तद्यानमधिरोहति ।
स विष्णुविक्रमः कामी[कर्मी] बृहस्पतिसमः प्रभुः ॥ ४० ॥

ब्राह्मणानां गवां चैव रक्षार्थं हन्यते यदि ।
स शूरो जीवितं दत्वा शक्रलोकमवाप्नुयात ॥ ४१ ॥

प्राप्ते द्विजातिमरणे मित्राणां विपदागमे ।
वृत्तिच्छेदे तथा प्राप्ते कलत्रहरणे तथा ॥ ४२ ॥

गवां च हरणे प्राप्ते स्वामिनो वा ग्रहे तथा ।
शस्त्रग्रहं न ये कुर्युः प्राणत्राणपरायणाः ॥ ४३ ॥

दृष्ट्वा तेषां मुखं सूर्यं पश्येत्पापात्मनां पुनः ।
स्वामिग्रहे विशेषश्चोपरिष्टादपि वक्ष्यते ॥ ४४ ॥

मौर्वीमेखलिनो ये च घृताक्ताः कुशचीरिणः ।
वीरा बद्धतनुत्राणाः सहस्रशतदक्षिणाः ॥ ४५ ॥

योक्ष्यमाणास्तदात्मानं यशसा विजयेन च ।
प्रज्वाल्य कृष्णवर्त्मानं हुत्वा कृत्वा रणे व्रतम् ॥ ४६ ॥

ब्राह्मणानांस्तर्पयित्वा च निष्कान्दत्वा पृथक् पृथक् ।
आश्ववासांसि च पुनः समाभाष्य परस्परम् ।
कुर्वन्त्यग्निसमीपे च शपथं कृतनिश्चयाः ॥ ४७ ॥

शृण्वतां सर्वभूतानामुच्चैर्वाचो वदन्ति च ।
यद्यहत्वा वयं युद्धे निवर्तिष्यामहे द्विषम् ॥ ४८ ॥

तेन चाभ्यर्दितास्त्रासाद्भवेम च पराङ्मुखाः ।
तदा प्राप्स्यामहे लोकान् महापातकिनां वयम् ॥ ४९ ॥

अतिपातकिनां लोकानुपपातकिनां तथा ।
इति ते क्रतुभिर्लभ्यान् समाप्तवरदक्षिणैः ॥ ५० ॥

प्राप्नुवन्त्युत्तमाल्लोकान् अक्षयान्युद्धकोविदाः ।
ते च कीर्तिं प्राप्नुवन्ति यावदाचन्द्रतारकम् ॥ ५१ ॥

नाराचशरसङ्घातैःशक्तिभिर्मुसलैस्तथा ।
शूलैः कुन्तैश्च खड्गैश्च चक्रेण गदयापि वा ॥ ५२ ॥

छुरिकाभिश्च विविधैः शस्त्रैरन्यैश्च मुष्टिभिः ।
अन्योन्यविजिगीषूणां योद्धॄणां यच्च ताडनम् ॥ ५३ ॥

तद्युद्धमिति विज्ञेयमित्यूचुर्युद्धवेदिनः ।
अतःपरं प्रवक्ष्यामः सङ्ग्रामायोचितां क्रियाम् ॥ ५४ ॥

कृत्वा तु प्रथमं स्नानं शुक्लवस्त्रावृतो भवेत् ।
माङ्गल्यगीतसंयुक्तो देवान्विप्रांश्च पूजयेत् ॥ ५५ ॥

कुमारीं पूजयेत्तत्र गन्धं पुष्पं प्रदापयेत् ।
क्षेत्रपालस्य नाम्ना तु बलिं दद्याद्दिशो दश ॥ ५६ ॥

शस्त्राणि पूजयेद्भक्त्या धनुर्नाराचमार्गणम्(णान्) ।
कृपाणं छुरिकां चक्रं शूलमन्यानि यान्यपि ॥ ५७ ॥

कुङ्कुमैश्चन्दनैश्चैव गात्रं तस्य विलेपयेत् ।
ललाटे बन्धयेत्पट्टं मस्तके कुङ्कुमानि च ॥ ५८ ॥

शरीरे धारयेद्दत्तं मणिमन्त्रौषधानि च ।
**तन्त्रचिन्तामणौ** यन्त्रमणिमन्त्रौषधादिकम् ॥ ५९ ॥

अस्मत्कृते तु द्रष्टव्यमभियुक्तेन तत्र च ।
गजारोहस्य संमानं निजवस्त्रं प्रदापयेत् ॥ ६० ॥

तस्य सन्तोषयेच्चित्तं यत्नेनैव परि(री)क्षयेत्? ।
चतुरङ्गबलं चैव सर्वं सन्तोषयेदबुधः ॥ ६१ ॥

सन्नाहं बिभृयात्स्वामी तथा नागं च धारयेत्? ।
ये वाहनमसन्नाह्य स्वयं सन्नाहधारकाः ॥ ६२ ॥

रणे ते नरकं यान्तीत्येवं युद्धविदां मतम् ।
धनूंषि चत्वारि तथा द्वे वामे द्वे च दक्षिणे ॥ ६३ ॥

चतुःशत्या च काण्डानामुभौ तूणौ प्रपूरयेत् ।
गुणा वै द्वादश ग्राह्या नाराचानां शतद्वयम् ॥ ६४ ॥

एवमन्यानि शस्त्राणि युद्धोपकरणानि च ।
अभ्यासस्यानुरूपेण समरे बाणधारणम् ॥ ६५ ॥

कुर्याद्धन्वी न शोभार्थमिति ब्रूमो वयं पुनः ।
ये राजपुत्रास्सामन्ता आप्ताः सेवकजातयः ॥ ६६ ॥

तान्सर्वानात्मनः पार्श्वे रक्षार्थं स्थापयेद्बुधः ।
राजपुत्राश्च भृत्याश्च तथान्याश्चैव जातयः ॥ ६७ ॥

सर्वे च स्वामिनं मध्ये संरक्षन्ति प्रयत्नतः ।
परस्परानुरक्ता ये योधाश्शार्ङ्गधनुर्धराः ॥ ६८ ॥

युद्धज्ञास्तुरगारूढा ये प्रयान्ति रणे रिपून् ।
नत्वा स्तुत्वा तथा ध्यात्वा युद्धयेत(रन्) रणकोविदाः ।
अच्छिद्रं च बलं व्यूह्य यायात्परबलं बली ॥ ६९ ॥

विना व्यूहेन सैन्यञ्च शत्रुभिः परिभूयते ।
युद्धार्थं युद्धकुशलं मुण्डानीकं प्रयोजयेत् ॥ ७० ॥

युद्धं हि नायकप्राणं हन्यते तदनायकम् ।
पत्तीनामाश्रयो घोटा घोटानामाश्रया त[र]थाः ॥ ७१ ॥

रथानामाश्रया नागा नागानामाश्रयः शिरः ।
सर्वेषामाश्रयः स्वामी सर्वैर्गोप्यः प्रयत्नतः ॥ ७२ ॥

रक्षिता स च सर्वेषामिति युद्धविदां नयः ।
स्वामी तु सकलैरेतैः रक्षणीयः प्रयत्नतः ॥ ७३ ॥

विराटपर्वणि यथा भीष्मादीन्द्रोण उक्तवान् ।
किन्नो गावः करिष्यन्ति धनं वा विपुलं तथा ॥ ७४ ॥

दुर्योधनः पार्थजले पूर्णा नौरिव मज्जति ।
इति द्रोणवचः श्रुत्वा नीतिशास्त्रविशारदाः ॥ ७५ ॥

रणभूमिविभागज्ञास्त्यक्त्वा(त्वा) गोग्रहनमुत्तमम् ।
दुर्योधनं द्रोणभीष्मकृपकर्णादयो भटाः ॥ ७६ ॥

ररक्षुः समरे शीघ्रं प्रसिद्धं गोग्रहेऽर्जुनात् ।
द्रोणाचार्यं यथा भीष्मो भीष्मपर्वणि चोक्तवान् ॥ ७७ ॥

यदैष निनदो घोरः श्रूयते रक्षसेरितः ।
हैडिम्बो युध्यते नूनं राज्ञा दुर्योधनेन च ॥ ७८ ॥

नैष शक्तो हि सङ्ग्रामे जेतु भूतेन केनचित् ।
य(त)त्र गच्छत भद्रं वो राजानं परिरक्षयेत् ॥ ७९ ॥

अभिभूतो महाभागो राक्षसेन दुरात्मना ।
एतद्धि परमं कृत्यं सर्वेषां नः परन्तपाः ॥ ८० ॥

द्रोणपर्वणि पार्थेन जयद्रथहितै[वधै]षिणा ।
युधिष्ठिरस्य रक्षार्थमेवमुक्तो हि सात्यकिः ॥ ८१ ॥

स त्वमद्य महाबाहो राजानं परिपालय ।
यथैव हि मया गुप्तस्त्वया गुप्तो भवेत्ततः ॥ ८२ ॥

सात्यकिः[र्भी] ममाहेदं राज्ञो रक्षार्थमाहवे ।
त्वं भीम रक्ष राजानमेतत्कार्यतमं हि ते ॥ ८३ ॥

अहं भित्वा प्रवेक्ष्यामि कालपक्वमिदं बलम् ।
आयत्यां च तदात्वे च श्रेयो राज्ञोऽभिरक्षणम् ॥ ८४ ॥

धृष्टद्युम्नं चेदमाह भीमसेनो महाबलः ।
धर्मराजस्य वचने स्थातव्यमविशङ्कया ॥ ८५ ॥

यत्नादद्य रणे पार्थं परिरक्ष युधिष्ठिरम् ।
एतद्धि सर्वकार्याणां परमं कृत्यमाहवे ॥ ८६ ॥

स्वामिनो रक्षणं धर्मः स्यादधर्मस्त्वरक्षणम् ।
एतद्धि धर्मशास्त्रोक्तं स स्वादार्थं प्रदर्शते ॥ ८७ ॥

भर्तुरर्थे प्रियान्प्राणानाहवे यस्त्यजेन्नरः ।
दिव्यं वर्षसहस्रं स स्वर्गलोके महीयते ॥ ८८ ॥

आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः ।
भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ ८९ ॥

गृहीतधनुषः शूराः स्वामिनः पुरतो हताः ।
दुरापान् क्रतुभिर्लोकानधिरोहन्ति शाश्वतान् ॥ ९० ॥

युद्धे स्वामि निरुद्धे ये भीत्या यान्ति पराङ्मुखाः ।
तेषां हि पापबुद्धीनां ब्रह्महत्या पदे पदे ॥ ९१ ॥

उपेक्षते वीक्षमाणं मूढो यः स्वामिनं रणे ।
रौरवे नरके घोरे स याति पुरुषाधमः ॥ ९२ ॥

यां गतिं ब्रह्महा गच्छेन्मातृहा पितृहा तथा ।
व्रतविक्रयकश्चैव तथैव गुरुतल्पगः ॥ ९३ ॥

क्षत्रियो यां गतिं गच्छेद्युद्धे वृत्ते पराङ्मुखः ।
तां गतिं प्रतिपद्येत यो विभुं समरे त्यजेत् ॥ ९४ ॥

तथैव सकलैरेतैः स्वामी रक्ष्यो रणाङ्गणे ।
स्वामिनापि तथैवेते रक्षणीयाः प्रयत्नतः ॥ ९५ ॥

नेता चेन्नृपतिर्न स्यात्सेना सर्वा प्रजापि वा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ ९६ ॥

स्वामिनो निधने प्राप्ते त्यक्त्वा प्राणानपि स्वकान् ।
रक्षेयुस्सैनिकाः स्वामिं[मी] मुञ्चेन्नासंभृत[कान्]कृते ॥ ९७ ॥

महाशूरोऽपि हि स्वामी स्वयं युद्ध्येत नारिणा ।
प्रेरयंत्केवलं सैन्यं शीघ्रं यानं समाश्रितः ।
न[नि]हता जामदग्न्येन यत्सहस्रार्जुनादयः ॥ ९८ ॥

स्वयं युद्धैषिणो[ऽ] राजा मयुद्ध्या(न्मृत्युमा)पुः परे नृपाः ।
राजधर्मं पुरस्कृत्य राज्ञा युद्ध्येत वा नृपः ॥ ९९ ॥

दुर्योधनं यथोवाच भीष्मो वै भीष्मपर्वणि ।
शृणु राजन् मम वचो यत्त्वां वक्ष्यामि कौरव ॥ १०० ॥

यथा त्वया महाराज वर्तितव्यं परंतप ।
आत्मरक्षो[त्मारक्ष्यो] रणे तात सर्वावस्थास्वरिन्दम ॥ १०१ ॥

धर्मराजेन संग्रामस्त्वया कार्यः सदाऽनघ ।
अर्जुनेन यमाभ्यां वा भीमसेनेन वा पुनः ॥ १०२ ॥

राजधर्मं पुरस्कृत्य राजा राजानमर्हति ।
कार्यानुरोधतो युद्धे प्राप्ते स्वामी समुत्थितम् ॥ १०३ ॥

स्वकं सैन्यं स्ववीर्यं च ज्ञात्वा युद्ध्येत कर्हिचित् ।
यथा युधिष्ठिरस्संख्ये द्वैरथे शल्यपर्वणि ॥ १०४ ॥

धार्मिकं शल्यमत्युग्रं जघानेतरदुर्जयम् ।
गजस्यन्दनवाहानां पत्तेरपि च कर्म यत् ॥ १०५ ॥

युयुत्सुना च तज्ज्ञेयं गतिभूश्च गुणाश्रया ।
प्रयाणे पूर्वयायित्वं वनदुर्गप्रवेशनम् ॥ १०६ ॥

अभूतानां च दुर्गाणां तीर्थानां च प्रवर्तनम् ।
तोयावतारसंभारो वेकाङ्गविजयस्तथा(?) ॥ १०७ ॥

अभिन्नानामनीकानां भेदनं भिन्नसंग्रहः ।
बिभीषिकाभिघातश्च प्राकारद्वारभञ्जनम् ॥ १०८ ॥

कोशनाशभयत्राणं हस्तिकर्म प्रचक्षते ।
चतुरङ्गस्य सैन्यस्य वारणं बलरक्षणम् ॥ १०९ ॥

अभिन्नभेदनं भिन्नसन्धानं रणकर्मणि ।
हीनश्रान्तानुसरणं वीवधासाररक्षणम् ॥ ११० ॥

समुत्थाय(याप)सरणे शीघ्रकार्योपपादनम् (?) ।
पतनं जवनस्याशु घोटानां कर्म कीर्तितम् ॥ १११ ॥

शोधनं सर्वदेशानां सर्वदा मार्गरक्षणम् ।
सदैव शस्त्रग्रहणं कर्म पत्तेरुदीरितम् ॥ ११२ ॥

शोधनं कूपतीर्थानां मार्गस्य शिबिरस्य च ।
यद्वशादि च यत्किञ्चिद्विज्ञेयं विषकर्म तत् ।
अगाधपङ्करहिता नदी न गमनान्विता ॥ ११३ ॥

सुसमा विषमा वापि सर्वा स्याद्दन्तिनां मही ।
सिकतापङ्कवल्मीकलतावृक्षादिवर्जिता ॥ ११४ ॥

निर्व्रणा सुसमा शुद्धा रथयोग्या क्षितिर्मता ।
विपङ्का विदरा तुल्या स्तोकप्रायातिविस्तरा ॥ ११५ ॥

निश्शर्करा सापसारा वाजिनां गमने मही ।
स्थूणस्थाणुलताहीना भूर्नापि विपिनावृता ॥ ११६ ॥

सापसारा पदातीनां शस्ता कण्टकवर्जिता ।
नक्रो हन्ति जले श्वानं श्वा नक्रं ग्रसति स्थले ॥ ११७ ॥

इति ज्ञात्वा देशकालं युद्धे देशं समाश्रयेत् ।
कौशिको वायसं हन्ति रात्रावह्नि तु वायसः ॥ ११८ ॥

हन्ति कौशिकमित्यस्माद्भवेत्कालबलं युधि ।
जातिं सत्वं च यो वृद्धिं पा[प्रा]णितां देहवेगिताम् ॥ ११९ ॥

तेजः शिल्पं च विज्ञाय हस्ता(स्त्या)दीन् विनियोजयेत् ।
सेनां व्यूहविधानेन रचयेद्वाहिनीपतिः ।
व्यूहस्तु बलविन्यासो यथासंभवसैनिकः ॥ १२० ॥

स्वसैन्यरक्षणे शस्तः परसैन्यविमर्दनः ।
आकारभेदतो भिन्नो व्यूहो विरलपृष्ठगः ॥ १२१ ॥

उरः पक्षौ च कक्षौ च मध्यं पृष्ठं प्रतिग्रहः ।
कोटिर(श्च)व्यूहशास्त्रज्ञैः सप्ताङ्गो व्यूह उच्यते ॥ १२२ ॥

उरस्यकक्षपक्षास्तु व्यूहोऽयं स प्रतिग्रहः ।
गुरोरेव च शुक्रस्य कक्षाभ्यां परिवर्ति(र्जि)तः ।
उभ(र)योस्तु मते तस्मात् चतुरङ्गो भवेत्पुनः ॥ १२३ ॥

उरःपक्षौ शिरश्चैव व्यूहोऽयं सप्रतिग्रहः ।
शिरसा रहितो यस्तु स गतासुः प्रकीर्तितः ॥ १२४ ॥

चतुरङ्गो भवेत्तस्मादिति ब्रूमो वयं पुनः ।
उरस्यादीनि भिन्नानि प्रतिगृह्णाति यद्बलम् ॥ १२५ ॥

प्रतिग्रह इति ख्यातः स तु कार्योऽभिरक्षकः ।
तेन शून्यस्तु यो व्यूहः स भग्न इति लक्ष्यते ॥ १२६ ॥

मण्डला(स्सं)संहतो भोगो दण्डश्चेति मनीषिभिः ।
वराहप्रकृतिव्यूहास्त्वेषां भेदास्त्वनेकधा ॥ १२७ ॥

मण्डलः सर्वतो वृत्तिः पृथग्वृत्तिरसंहतः ।
भोगोऽन्योऽन्यवृत्तिरेवं स्यात्तिर्यग्वृत्तिस्तु दण्डकः ॥ १२८ ॥

मण्डलव्यूहभेदौ तु सर्वतोभद्रदुर्जयौ ।
असंहतस्य भेदा स्युरर्धचन्द्रोऽर्धवर्जकाः ।
तथैव कर्कटा शृङ्गी सूचिभेदी च गोधिका ॥ १२९ ॥

गोमूत्रिका च संचारी शकटो मकरस्तथा ।
भोगभेदाः समाख्यातास्तथा परिपतत्रकः ॥ १३० ॥

प्रदरो दृढकोऽसह्यश्चापश्चाकुक्षिरेव च ।
प्रतिष्ठस्सुप्रतिष्ठश्च श्येनो विजयकुञ्जरौ ॥ १३१ ॥

विशाल विजयस्तब्द[ब्धः]स्थूणाकर्णश्च मूषिकः ।
झषास्यो वलयश्चेति दण्डभेदाः सुदुर्जयाः ॥ १३२ ॥

गारुडश्च भुजङ्गश्च व्यूहावेतावपि स्मृतौ ।
सहस्रं वाजिनां श्रेष्ठं हरिणा व्यञ्जनस्थितम् ॥ १३३ ॥

सुसन्नद्धं च वीरं च वरारोहसमन्वितम् ।
पार्श्वयोश्च समं कृत्वा वाजिसैन्यं सुसंहतम् ॥ १३४ ॥

सहस्ते च [स्रेण]पदातीनां वेष्टयित्वा गजोत्तमम् ।
अग्रभागेन शून्येन चालयेत्समरे तथा ।
एष स्याद्गारुडव्यूहो गजस्य परिकीर्तितः ॥ १३५ ॥

दुर्जयं सर्वभूतानां सर्वशत्रुविनाशनम् ।
अग्रभागे गजं कृत्वा सुसन्नद्धं मदोत्कटम् ॥ १३६ ॥

तस्य पश्चिमभागे तु निजसैन्यं प्रकल्पयेत् ।
एषस्यादद्भूतगव्यूहः सर्वशत्रुविनाशनः ॥ १३७ ॥

मध्यदेशे हया देया रथि[था]नीकं च कक्षयोः ।
क[प]क्षयोश्च गजानीकं मुखे पत्तीन्प्रकल्पयेत् ॥ १३८ ॥

मुखे राजा रथाः पृष्ठे तस्य पृष्ठे पदातयः ।
पार्श्वयोश्च हया देया व्यूहस्यायं विधिः स्मृतः ॥ १३९ ॥

उरसि स्थापयेन्नागान् प्रचण्डान् कक्षयो रथान् ।
पत्तींश्च पक्षयोर्दद्यान्मुखेऽश्वानित्यपि स्मृतम् ॥ १४० ॥

पार्श्वयोरुभयोरश्वान् वाजिनां पार्श्वयो रथाः ।
रथानां पार्श्वयोर्नागास्तेषां चाटविकं बलम् ॥ १४१ ॥

पश्चात्सेनापतिः सर्वं पुरस्कृत्य स्वकं बलम् ।
यायात्सन्नद्धसैन्यौघः छिन्नानाश्वासयन् शनैः ।
याया[त्] व्यूहेन महता मकरेण पुरोभयोः ॥ १४२ ॥

श्येनेनाकृतपक्षेण सूच्या वा वीरचक्रया ।
पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसंज्ञ[ज्ञि]तम् ॥ १४३ ॥

सर्वतः सर्वतोभद्रं भवे[त्] व्यूहं प्रकल्पयेत् ।
यतश्च भयमाशंकेत्ततो विस्तारयेद्बलम् ॥ १४४ ॥

पद्मेन चैव व्यूहेन प्रविशेत तदा स्वयम् ।
सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत् ॥ १४५ ॥

यतश्च भयमाक्षं(शं)केत्तां प्राचीं कल्पयेद्दिशम् ।
नायकस्तुतरां पश्चात्प्रवीरपुरुषावृतः ॥ १४६ ॥

फल्गुसैन्यं च यत्किञ्चिन्मध्ये व्यूहस्य तद्भवेत् ।
एकैकमङ्गं न स्याच्चेदाश्रयेत्तत्तदाश्रयम् ॥ १४७ ॥

इति व्यूहप्रकारांश्च व्यूहशास्त्रविदो विदुः ।
अन्येषामपि रूपं च [व्यूहं च] ज्ञेयमाकारभेदतः ॥ १४८ ॥

उपस्थिते युद्धकाले व्यूहानेवं प्रयोजयेत् ।
एवं व्यूहं प्रयत्नेन कुर्यात्सेनापतिः स्वयम् ॥ १४९ ॥

विदारयेद्व्यूहकृतैर्बलैश्च द्विषतां बलम् ।
पादरक्षास्तथा कुर्याद्रथमातङ्गवाजिनाम् ।
रथे दशगजाः प्रोक्ताः गजे दश च वाजिनः ॥ १५० ॥

पत्तयो दश चाश्वेषु पादरक्षाः समन्ततः ।
तथा च खलु युद्धयेरन् पत्त्यश्वरथदन्तिनः ॥ १५१ ॥

यथा भवेदसंबाधः पत्त्यश्वविनिवर्तने ।
पत्त्यश्वरथमातङ्गः पत्त्यश्वरथदन्तिना ॥ १५२ ॥

यथा संख्येन युद्धयेत नियमो न तु संकुले ।
असङ्करेण युद्धयेत सङ्करः संकुलावहः ॥ १५३ ॥

महासंकुलयुद्धं तु संश्रयेरन् महागजान् [:] ।
राजधर्मेऽब्रवीद्व्यासः सहस्रे निहतं भवेत् ॥ १५४ ॥

यदा तदा कबन्धस्तु समुत्तिष्ठेद्रणाङ्गणे ।
हतं वीरसहस्रं चेत्कबन्धस्तत्र नृत्यति ॥ १५५ ॥

घोरयुद्धे समुत्पन्ने केचिदेवं प्रचक्षते ।
शूरः शूरसहस्रं चेदेको हन्याद्रणाङ्गणे ॥ १५६ ॥

कबन्धस्ताण्डवं तत्र करोतीति मतं हि नः ।
वृथाश्रमो न कर्तव्यो युद्धकाल उपस्थिते ।
श्रान्ताः सैन्या हि सीदन्ति वातौघैर्जलदा इव ॥ १५७ ॥

अविचार्य पदं कृत्वा याति शीघ्रं यमालयम् ।
तस्माद्विमृश्य बहुधा पदं न्यस्येद्विचक्षणः ॥ १५८ ॥

अन्योन्यमभिरक्षन्तो युद्धयेरन्नभितो भटाः ।
अरक्षका विनश्यन्ति यादवास्समरे यथा ॥ १५९ ॥

यदि स्यादुत्कटो हन्ता संश्रयेत्तत्र रक्षणम् ।
रक्षको दुर्घटो यत्र तत्रापसरणं हितम् ॥ १६० ॥

शूरोऽपि निस्सहायश्चेत्पदमात्रमपि व्रजेत् ।
शीघ्रं विनाशमायाति कुरूणां नृपतिर्यथा ॥ १६१ ॥

क्लीबोऽपि ससहायस्सन् स्वेच्छया विहरेत्तथा ।
सहायमर्जुनं प्राप्य हतो भीष्मः शिखण्डिना ॥ १६२ ॥

महतामाश्रयो युक्तो विपदामागमे सति ।
यथा प्रस[प]न्नाः शरणं पाण्डवाः परमेश्वरम् ॥ १६३ ॥

श्रेष्ठानां संग्रहः कार्यो भयानां भञ्जना हि ते ।
विराटो विपदाक्रान्तो रक्षितः पाण्डवैर्यथा ।
कनीयसोऽपि रक्षातो लभते विपुलं फलम् ॥ १६४ ॥

ददाह राघवो लङ्कां वानरेण हनूमता ।
स[अ]रक्षकं कर्तुमिच्छन्मसात्यकि [न्ससात्यकि] जिघांसया ॥ १६५ ॥

भूरिश्रवाश्छिन्नकरोऽभूत्पार्थे रक्षके सति ।
प्रत्यर्थिनः साहसिकाः शूरास्समरकांक्षिणः ॥ १६६ ॥

निकटे यदि दृश्यन्ते युधे[ध्ये]रन् दूरयोधिनः ।
अभेदेन बलेनैव युद्धयेत रणकोविदः ॥ १६७ ॥

परैर्बले युद्धयमाने रुद्धदानेन योधयेत् ।
आत्मभूमिं प्रविश्याथ सुदूरं च रणे रिपोः ॥ १६८ ॥

व्याधुट्या गच्छतो मार्गं रुध्वा युद्धं समाचरेत् ।
जलाद्रिवनदेशेषु दुर्गेष्वपि विशेषतः ॥ १६९ ॥

योद्धव्यं सावधानेन यतस्तेभ्यो महद्भयम् ।
कदाचित्तत्र नोपेयाद्यस्मादागन्तुमक्षमः ॥ १७० ॥

गच्छन्मृत्युमवाप्नोति सौभद्रः समरे यथा ।
सहसोत्पतितानां च निराशानां च जीविते ।
न शक्यमग्रतः स्थातुं तस्मात्तत्रापि न व्रजेत् ॥ १७१ ॥

अनेकेऽपि सहैकेन [युद्धये]ध्येरन्नवधानतः ।
एकोऽपि हि रणे जेता किरीटी गोग्रहे तथा ॥ १७२ ॥

रणभूमौ विजयिनां स्थितिर्नीतिविरोधिनी ।
धृष्टद्युम्नमुखान् वीरानश्वत्थामाऽवधा[धी]द्यतः ॥ १७३ ॥

प्रत्यग्रे कर्मणि कृते श्लाघमानः कृतादरः ।
योधिभ्यश्च ततो वि(द)द्यात्को हि दातुम[र्न]युद्धयते ॥ १७४ ॥

अनादृत्य कुलं शीलं श्रुतं धर्मं च पौरुषम् ।
जनो दातरि रक्तः स्यादिति दातृत्वमाश्रयेत् ॥ १७५ ॥

अमितं वस्तु यच्चेष्टं तद्दद्याद्राजघातिने ।
तदर्धं तत्सुतवधे सेनापतिवधे तथा ॥ १७६ ॥

प्रवीराणां तु मुख्यस्य शतं शतगुणं वधे ।
तदर्धं वीरमात्रस्य वधे दानं प्रकीर्तितम् ॥ १७७ ॥

सहस्रं स्यादश्ववधे पत्तिमुख्यवधेऽर्धकम् ।
युग्मं[ग्यं] हेम च कुप्यं च यो यत्प्राप्नोति तस्य तत् ।
दद्याद्वस्त्वनुरूपं वा हृष्टो योधान् प्रहर्षयेत् ॥ १७८ ॥

धर्मतो यदि युद्धयेत धर्मेणैव निवारयेत् ।
असन्नद्धोऽकवचिना योद्धव्यः क्षत्रियो रणे ॥ १७९ ॥

स चेत्सन्नद्ध आगच्छेत्सना[न्ना]हं बिभृयात्तदा ।
विकीर्णकवचं चैव तवास्मीति च वादिनम् ॥ १८० ॥

कृताञ्जलिं न्यस्तशस्त्रं गृहीत्वा न विहिंसयेत् ।
व्यसने न प्रहर्तव्यं त (न) भीताय जिताय वा ॥ १८१ ॥

अशक्तो धर्मयुद्धे चेत्कूटयुद्धं समाश्रयेत् ।
छद्मना शत्रुनाशो हि धर्मं न तिरयेद्यतः ॥ १८२ ॥

तद(थ)ाहि भगवान् पार्थं गदायुद्धेऽभ्यभाषत ।
उपदेशोऽनयोस्तुल्यो भीमस्तु बलवत्तरः ॥ १८३ ॥

कृतियत्नपरस्त्वेष धार्तराष्ट्रो वृकोदरः[रात्] ।
भीमसेनस्तु धर्मेण युद्ध्यमानो न जेष्यति ॥ १८४ ॥

अन्यायतो युद्ध्यमानो ध्रुवं हन्यात्सुयोधनम् ।
मायया विजिता देवैरसुरा इति नः श्रुतम् ।
न हि धर्मव्यपेतं हि भगवानभिभाषते ॥ १८५ ॥

स्वल्पं व्यक्तं पुरो देशो दर्शयेद्गहनं वनम् ।
पार्श्वतो भूरिसेनाभिर्गुप्ताभिर्नाशयेदरीन् ॥ १८६ ॥

परैस्समानदेशास्युश्छद्मना तत्समीपगाः ।
संग्रामे समनुप्राप्ते निहन्याः[निहन्यात्] परवाहिनीम् ॥ १८७ ॥

सन्धिस्थ(स्थ)ले च विश्वस्तान्निहन्याद्युद्धदुर्मदान् ।
अथवाराति[त्रि]युद्धेन मायायुद्धबलेन वा ॥ १८८ ॥

सर्वानपि च शस्त्रौघान् संपाद्य विषदूषितान् ।
नानानीकोद्भवान् शत्रून् निहन्याद्विषशास्त्रवित् ॥ १८९ ॥

संहतोऽसंहतं हन्याद्धन्यादश्रान्तवाहनम् ।
रक्षितो रक्षितं चैव शत्रोश्छिद्रं विलोकयेत् ॥ १९० ॥

रात्रावप्यभ्युपायैस्तु युद्ध्येत रिपुणा हनम्(?) ।
अह्नि नानाविधोपायः परिग्लानानरीन्निशि ।
युद्धार्तान् तृषितान् रुग्णान्निद्राशोकभयाकुलान् ॥ १९१ ॥

मिथः कलहसंपन्नान् ज्ञात्वारीन् युद्धमाचरेत् ।
चोरवेषात्पराज्ञातोऽपथावस्थितशत्रुहा ॥ १९२ ॥

उपयोज्य विषाक्तं च द्रव्यं शत्रून् निषूदयेत् ।
उपायैः सकलैर्जेयः शत्रुर्नीतिविदां परैः ॥ १९३ ॥

कृष्णेन प्रेरितो हन्ता कर्णस्यासीद्धनञ्जयः ।
स्वदेशश्चेत्पराक्रान्तः परदेशं ततो दहेत् ॥ १९४ ॥

तद्रक्षार्थं गते शत्रौ स्वदेशः सुस्थितो भवेत् ।
सैन्यं बहु यदा नास्ति शत्रुं जेतुं महीभुजः ।
स्वल्पसारबलेनापि धावतो बिभृयान्महीम् ॥ १९५ ॥

युद्धोपयोगी यः प्रोक्तस्तत्र यन्न विरुद्ध्यते ।
[क्री]त्रीडायुद्धेऽपि तज्ज्ञेयं युद्धवत्क्रीडनं यतः ॥ १९६ ॥

इति श्रीमन्महाराजाधिराजगजपतिप्रतापरुद्रदेवस्वहस्तधारितकनककेसरिचतुष्टयावेष्टित-
शातकुम्भमयकुम्भसंभृतमेघाडंबराभिधानसितातपत्रशोभमानकविपुङ्गव-
पण्डितराजराजगुरुवाजपेययाजिमन्त्रिवरगोदावरमिश्रविरचिते
हरिहरचतुरङ्गे सप्तमो युद्धपरिच्छेदः ॥

---

## ॥ अष्टमः क्रीडापरिच्छेदः ॥



युद्धसाधनमाख्यातं चतुरङ्गं निरूपितम् ।
धनुर्विद्यादिकं नीतिर्मन्त्रपूर्वा निरूपिता ॥ १ ॥

युद्धमुक्तं च योद्धॄणामधुना बुद्धिवृद्धये ।
अनायासेन युद्धस्य शिक्षार्थमपि कस्यचित् ॥ २ ॥

सर्वेषामपि लोकानां मनसो रञ्जनाय च ।
विष्णौ शिवे वा भक्तानामपि सन्तुष्टये नृणाम् ॥ ३ ॥

देवयुद्धं हरिहरचतुरङ्गद्वयाश्रितम् ।
क्रीडारूपेण संक्षिप्य लिख्यते कौतुकादपि ॥ ४ ॥

क्रीडको रचयेद्द्वेधा विधाद्वयविनिर्मितम् ।
एकं हरिस्वामिकं स्यादपरं हरनामकम् ॥ ५ ॥

स्वामी च युवराजश्च मन्त्री सेनापतिस्तथा ।
हस्तिस्यन्दनवाहानां प्रत्येकं च चतुष्टयम् ॥ ६ ॥

खड्गिशाक्तिकधानुष्कयन्त्रिणामपि पूर्ववत् ।
द्वात्रिंशत्संख्यकं चैव कुर्याद्धरिबलं महत् ॥ ७ ॥

हरस्यापि तथा कुर्याद्द्वात्रिंशत्संख्यकं बलम् ।
चतुष्षष्ट्यात्मकं च स्यात्संभूयोभययोर्बलम्(?) ॥ ८ ॥

बलद्वयेऽपि चतुरश्चतुरो वाद्यकारिणः ।
कुर्यात्संभूय तैस्संख्या ह्यधिका सप्ततिर्भवेत् ॥ ९ ॥

स्वामिनो युवराजस्य मन्त्रिणो वाहिनीपतेः ।
हस्ता[स्ति]नां स्यन्दनानां च वाजिनां च यथाक्रमम् ॥ १० ॥

चतुर्विधानां पत्तीनां घटनं लिख्यतेऽधुना ।
युद्धयोग्यमहादेशभूनां शस्त्रौघधारिणाम् ॥ ११ ॥

चतुर्भुजं हरे रूपं कुर्यात् श्रीवत्सवक्षसम् ।
शङ्खचक्रं शार्ङ्गधरं दधानं करपल्लवैः ॥ १२ ॥

वसानं वाससी पीते गरुडोपरि संस्थितम् ।
नलिनीदलविस्तीर्णकर्णान्तव्यापिदृग्युगम् ॥ १३ ॥

शस्त्रैर्नानाविधैर्युक्तवाहनं कौस्तुभान्वितम् ।
किरीटान्वितमूर्धानं रत्नच्छत्रविराजितम् ॥ १४ ॥

धातुदन्तेन्धनाद्यैस्तु प्रकृती दैवभेदतः ।
कुर्याद्देवौ हरिहरौ वर्णैनेच्छानुरूपतः ।
चतुर्भुजं हरं कुर्यादासीनं वृषभासने ॥ १५ ॥

दधानं शूलभ्र[ड]मरु पिनाकेषु कराम्बुजैः ।
कपर्दिनं नीलकण्ठमर्धचन्द्रविभूषितम् ॥ १६ ॥

शिरोदाम्ना शोभमानं नेत्रत्रयदि[नेत्रत्रयवि] भूषितम् ।
शस्त्रैर्नानाविधैर्युक्तवाहनं नागभूषणम् ॥ १७ ॥

व्याघ्रचर्माम्बरधरं रत्नच्छत्रविराजितम् ।
युवराजस्तथा मन्त्री वाहिनीनायकस्तथा ॥ १८ ॥

रा[ग]जारोहाः स्यन्दनिनः सादिनः स्वामिनोर्द्वयः[योः] ।
धनुर्बाणाङ्गुलित्राणकराः कार्याः किरीटिनः ॥ १९ ॥

सूत्रिमन्त्रिचमूनाथाः व्योमयानं समाश्रिताः ।
शिष्टा विशेषनिपुणाः गजस्यन्दनवाजिषु ॥ २० ॥

निस्त्रिं[स्त्रिं]शशक्तिनाराचकुन्तखड्गाङ्कितासनाः ।
युवराजादयस्सर्वे भवेयुर्युद्धसज्जिताः ॥ २१ ॥

खड्गशक्तिधनुर्यन्त्रपाणयः स्युः पदातयः ।
बलदेशे च चत्वारश्चत्वारो वाद्यकारिणः ।
गजमेकः समारूढो हयमेकस्तथा परौ ॥ २२ ॥

पत्तिस्स्यातां यथेच्छं च वाद्यमेषां प्रकल्पयेत् ।
योधा एव रथे शङ्खवाद्यकाराः प्रकीर्तिताः ॥ २३ ॥

स्वामिनोरुभयोस्सैन्यं सर्वं सस्वामिरूपकम् ।
क्रीडायुद्धासनं कुर्यात्पट्टवस्त्रादिनिर्मितम् ॥ २४ ॥

कुर्यात्कोष्ठविभागार्थं रेखां रज्जुविनिर्मिताम् ।
दश पंच च रेखाः स्युः पूर्वपश्चिमसंस्थिताः ॥ २५ ॥

दक्षिणोत्तरतश्चापि चतुरश्रं भवेत्ततः ।
एवं कृते भवेत्कोष्ठं चतुर्न्यूनशतं द्वयम् ॥ २६ ॥

चतुर्दशभिरेवं स्युः कोष्ठैः द्विस्सप्त पङ्क्तयः ।
पङ्क्तयः सप्त सप्त स्युः सीमान्तौ स्वामिनोर्द्वयोः ॥ २७ ॥

सीमान्त्या सप्तमी पङ्क्तिः सीमादिः प्रथमा स्मृता ।
सीमान्तपङ्क्तयोर्यन्मध्यं यदन्त्यं पार्श्वयोर्द्वयोः ॥ २८ ॥

सीम्नोर्द्वयोर्यच्च भवेदाद्यपङ्क्तिद्वयं द्वयम् ।
तस्य तस्यापि यन्मध्यं तदन्त्यं पार्श्वयोर्द्वयोः ।
चतुःकोष्ठं तच्च कुर्यात्पद्मलाञ्छनशोभितम् ॥ २९ ॥

लाञ्छितानां चतुष्काणां कोष्ठानां कोणमध्ययोः ।
तयोर्मध्यचतुष्कं यत्तदपि स्याच्च लाञ्छितम् ॥ ३० ॥

सैन्यं सस्वामिकं व्यूहविधानेध निवासयेत् ।
क्रीडाज्ञः क्रीडनासक्तः क्रीडार्थं क्रीडनासने ॥ ३१ ॥

अनेके यद्यपि व्यूहाः कथिता युद्धकोविदैः ।
तथापि केचिल्लिख्यन्ते क्रीडायां[उपलक्षणाः] लक्ष्ययोगिनः ॥ ३२ ॥

*स्वामिनं युवराजं च सीमादौ मध्यचिह्नयोः ।
स्थापयेद्दक्षिणे देवं युवराजं च वामतः ॥ ३३ ॥

वामतो युवराजस्य स्थापयेद्वाहिनीपतिम् ।
स्वामिनो दक्षिणे पार्श्वे मन्त्रिणं प्राणसम्मितम् ॥ ३४ ॥

मन्त्रिस्वामितनूजानां वाहिनीनायकस्य च ।
स्थापयेदग्रकोष्ठेषु तुरङ्गमचतुष्टयम् ॥ ३५ ॥

---

* पश्यत चित्रम्.

समादिपार्श्वद्वितये यल्लाञ्छितयुगं युगम् ।
चतुरो वारणांस्तत्र स्थापयेत्कोष्ठसंख्यया ।
चतुर्णां वारणेन्द्राणामग्रकोष्ठचतुष्टये ॥ ३६ ॥

चतुरः स्थापयेद्धीमान् स्यन्दनान्समराङ्गणे ।
सीम्नो मध्यमपङ्क्तौ च मध्यकोष्ठेषु च क्रमात् ॥ ३७ ॥

यन्त्रिधन्व्यष्टकं स्थाप्य यन्त्र्यनन्तरधन्विकम् ।
तेषामग्राष्टकोष्ठेषु शक्तिखड्गान्विताष्टकम् ॥ ३८ ॥

शक्तिको यन्त्रिणोऽग्रे स्यात्खड्गी स्याद्धन्विनोऽग्रतः ।
झषास्यसंज्ञकं व्यूहसंस्थानमिदमीरितम् ॥ ३९ ॥

शकटव्यूहसंस्थानमुच्यते योधनन्दनम् ।
उपसीमादिपङ्क्तौ च मध्यमे लाञ्छितद्वये ॥ ४० ॥

स्थापयेद्दक्षिणे देवं युवराजं च वामतः ।
स्वामिनो दक्षिणे पार्श्वे स्थापयेन्मन्त्रकोविदम् ॥ ४१ ॥

वामतो युवराजस्य स्थापयेद्वाहिनीपतिम् ।
मन्त्रिणो दक्षिणे पार्श्वे सेनानाथस्य वामतः ॥ ४२ ॥

कोष्ठद्वये द्वयं दद्याद्घोटकानां द्वयं द्वयम् ।
पार्श्वयोश्च रथौ स्थाप्यौ वामदक्षिणवाजिनौ ।
शाक्तिकद्वितयं दद्याद्रथयोरग्रकोष्ठयोः ॥ ४३ ॥

रथद्वयं लाञ्छितयोः रथयोः पृष्ठकोणयोः ।
सीम्नो मध्यमपङ्क्तौ च मध्यकोष्ठचतुष्टये ॥ ४४ ॥

मतिमान् वारणेन्द्राणां स्थापयेच्च चतुष्टयम् ।
मध्यपङ्क्ते[ङ्क्तौ]र्लाञ्छितेषु चतुःकोष्ठेषु दन्तिनाम् ॥ ४५ ॥

पार्श्वयोर्ध्वनिनां[र्धन्विनां] देयाश्चत्वारश्शरसंयुताः ।
धन्विनां पुरतः कोष्ठचतुष्टयसमाश्रिताः ॥ ४६ ॥

चत्वारः खड्गिनश्चर्मपाणयः प्राणदारणाः ।
सीमान्तपङ्क्तेर्यन्मध्यं लाञ्छितं द्वितयं ततः ॥ ४७ ॥

शाक्तिकद्वितयं न्यस्येत्तत्रश्चाग्रयन्त्रियुग्मकम् ।
यन्त्रिणोः पार्श्वयोर्यन्त्रियुग्मं न्यस्येत्सुसज्जितम् ॥ ४८ ॥

एवं च शकटव्यूहसंस्थानं परिवर्णितम् ।
मण्डलव्यूहसंस्थानमस्माभिरधुनोच्यते ॥ ४९ ॥

सीम्नो मध्यमपङ्क्तेश्च मध्यकोष्ठचतुष्टये ।
चतुष्टयं धन्विनां स्यात्तेषां पश्चाच्च यन्त्रिणः ।
पुरस्ताच्छाक्तिकास्तेषां पुरस्तात खड्गिनो मताः ॥ ५० ॥

वेष्टयेदितरैस्सर्वैः प[त्ती]नेतान् प्रदक्षिणम् ।
उपसीमादिपङ्क्तिस्थान्वाममध्यमलाञ्छितान् ॥ ५१ ॥

स्वामी मन्त्री दन्तियुग्मं रथद्वयं(द्वयं रथ) हयस्य च ।
हयौ सेनापतिर्वाजिरथौ हस्तिद्वयं क्रमात् ।
मण्डलव्यूहसंस्थानमस्माभिरिदमीरितम् ॥ ५२ ॥

अर्धचन्द्राकृतिव्यूहसंस्थानमधुनोच्यते ।
स्वामिनं युवराजं च सीमादौ मध्यचिह्नयोः ॥ ५३ ॥

स्थापयेद्दक्षिणे देवं युवराजं च वामतः ।
वामतो युवराजं च स्थापयेद्वाहिनीपतिम् ॥ ५४ ॥

स्वामिनो दक्षिणे पार्श्वे वासयेन्मन्त्रकोविदम् ।
मन्त्रिस्वामितनूजानां वाहिनीनायकस्य च ॥ ५५ ॥

स्थापयेदग्रकोष्ठेषु वारणानां चतुष्टयम् ।
वारणानामग्रतश्च रथिनां स्याच्चतुष्टयम् ॥ ५६ ॥

रथिनां वारणानां च पार्श्वयोर्वाजियुग्मकम् ।
पार्श्वयोर्यन्त्रिणौ स्यातां रथपार्श्वस्थवाजिनोः ॥ ५७ ॥

यन्त्रिणोरग्रतः स्यातां शाक्तिकौ चर्मधारिणौ ।
दक्षस्थशाक्तिकस्य स्याद्दक्षपार्श्वे धनुर्धरः ॥ ५८ ॥

खड्गी तस्याग्रतस्तस्य दक्षपार्श्वे च यन्त्रधृक् ।
तस्याग्रतः शक्तिकस्स्यात्तद्दक्षे च धनुर्धरः ॥ ५९ ॥

तस्याग्रतश्च खड्गी स्यादेवं वामस्थशाक्तिकात् ।
ज्ञेयं समानमर्धचन्द्राकृति[कृत्यादि] व्यूहनं स्थितौ(?) ।
देयं वामपदं दक्षपदस्थाने तु केवलम् ॥ ६० ॥

उक्तोर्धचन्द्राकृतिको दुर्जयो व्यूह उच्यते ।
उपसीमादि पङ्क्तेस्स्युः मध्यकोष्ठाष्टसु क्रमात् ॥ ६१ ॥

हस्तियुग्मं चमूनाथः सूतः स्वामी च मन्त्रवित् ।
वारणद्वितयं चैषां पुरतः क्रमतो न्यसेत् ॥ ६२ ॥

रथयुग्मं यन्त्रिणश्च चत्वारो रथयुग्मकम् ।
एतेषामग्रकोष्ठेषु वाजियुग्मं धनुर्भृतः ॥ ६३ ॥

चत्वारो वाजिनौ द्वौ च तेषामग्रेष्वपि क्रमात् ।
शाक्तिकौ द्वौ खड्गिनश्च चत्वारश्शाक्तिकौ तथा ॥ ५४ ॥

अयं च दुर्जयव्यूहो वज्रव्यूहोऽधुनोच्यते ।
उपसीमादिपङ्क्तौ स्युर्मध्यकोष्ठचतुष्टये ६५ ॥

सैन्यनाथो राजपुत्रः स्वामी मन्त्री क्रमादमी ।
एषामग्रचतु कोष्ठे तुरङ्गमचतुष्टयम् ॥ ६६ ॥

तस्याग्रे च चतुःकोष्ठे शाक्तिकानां चतुष्टयम् ।
तस्याप्यग्रचतु कोष्ठे सड्गिनां स्याच्चतुष्टयम् ॥ ६७ ॥

चतुष्कानां च सर्वेषां वामदक्षिणपार्श्वतः ।
सन्त्यज्य कोष्ठमेकैकं भवेत्कोष्ठद्वये द्वये ॥ ६८ ॥

दन्तिस्यन्दन यन्त्र्याख्य धन्विद्वन्द्वं यथाक्रमम् ।
वज्रव्यूहस्य संस्थानमेतत्प्रोक्तमथोच्यते ॥ ६९ ॥

कर्कटव्यूहसंस्थानं योद्धृणां लिख्यतेऽधुना ।
कर्कटव्यूहसंस्थानं कर्कटाकृतिसंस्थितिः ॥ ७० ॥

हस्तियुग्मं यन्त्रधारी शाक्तिकौ चापभृत्ततः ।
मन्त्री स्वामी च धानुष्कः शाक्तिकौ यन्त्रधृग्द्विपौ ॥ ७१ ॥

उपसीमादिपङ्क्तेः स्युः पूर्वकोष्ठेष्वपि क्रमात् ।
एषामग्रे रथो या(वा)जी यन्त्री खड्गिद्वयं ततः ॥ ७२ ॥

धन्वी सेनापतिः पुत्रो ध[धा]नुष्काः खड्गियुग्मकम् ।
यन्त्रिवाजिरथास्सर्वे भवेयुः क्रमशः परम् ॥ ७३ ॥

धन्विनोः पुरतः कोष्ठं त्यक्त्वैकैकं हरिद्वयम् ।
न्यसेत्कोष्ठद्वये चैव स्यन्दनद्वितयं ततः ॥ ७४ ॥

रथद्वयस्य पुरतो न्यसेत्सीमान्तकोष्ठयोः ।
उक्तः कर्कटनामासावाहिसञ्चार उच्यते ॥ ७५ ॥

उपसीमादिपङ्क्तौ द्वे त्यक्त्वा कोष्ठे तृतीयके ।
प्रभुं तद्वामपार्श्वे तु गजं तद्वामतो हयम् ॥ ७६ ॥

तत्पार्श्वकोष्ठं संत्यज्य शाक्तिकद्वितयं न्यसेत् ।
मुक्त्वा तत्पार्श्वकोष्ठं तु हयं नागं सुतं क्रमात् ॥ ७७ ॥

प्रभोरग्रे मन्त्रिणं तु तद्वामे रथिनं न्यसेत् ।
तत्पार्श्वकोष्ठान्तरितचतुःकोष्ठेषु शाक्तिकम् ॥ ७८ ॥

खड्गियुग्मं शाक्तिकं च क्रमादेतांश्च वासयेत् ।
तद्वामकाष्ठान्तरितकोष्ठयो रथिनं तथा ॥ ७९ ॥

विन्यसेद्वाहिनीनाथं मन्त्रिदक्षाग्रकोणके ।
गजं तद्वामतो यन्त्री हस्ती तद्वामतः क्रमात् ॥ ८० ॥

कोष्ठत्रयं परित्यज्य खड्गियुग्मं ततो न्यसेत् ।
तद्वामकोष्ठत्रितयं मुक्त्वा न्यस्येद्धनुर्धरम् ॥ ८१ ॥

तद्वामे वारणं दत्वा न्यसेत्पञ्चमपङ्क्तितः ।
द्वे रथद्वितये ये तु तुरङ्गस्तस्य वामतः ॥ ८२ ॥

विन्यस्य यन्त्रिणं तस्य वामकोष्ठाष्टकं त्यजेत् ।
ततः कोष्ठत्रये धन्वितुरगस्यन्दनान्न्यसेत् ॥ ८३ ॥

षष्ठपङ्क्तावाद्यकोष्ठं त्यक्त्वा कोष्ठद्वितीयके ।
यन्त्रिणो वासयित्वा तु त्यक्त्वा तद्वामपार्श्वतः ॥ ८४ ॥

दशकोष्ठानि धानुष्कं वासयेच्च चमूपतिः ।
सीमान्तपङ्क्तेराद्ये स्याद्दन्ती प्रान्ते धनुर्धरः ॥ ८५ ॥

अहिसञ्चारनामासौ प्रतिष्ठाव्यूह उच्यते ।
वामतः क्रमतो न्यस्येद्यावदत्र प्रवक्ष्यते ॥ ८६ ॥

सीमान्तपङ्क्तेः कोष्ठेषु सप्तसु स्युः क्रमादमी ।
आद्यौ रथौ खड्गहस्ताश्चत्वारः शक्तिभृ[भृ] त्ततः ॥ ८७ ॥

आद्ये त्यक्त्वा षष्ठपङ्क्तौ पञ्चैव स्युः क्रमादमी ।
शाक्तिको वाजियुग्मं च शक्तिधारी धनुर्धरः ॥ ८८ ॥

पङ्क्तौ भवेयुः पञ्चम्यामाद्ये त्यक्त्वा तु पञ्चसु ।
धनुष्मान् शक्तिभृत्सेनापतिर्वाजी च चापभृत् ॥ ८९ ॥

आद्ये त्रयं परित्यज्य मध्यपङ्क्तौ चतुर्षु च ।
सुतं धनुर्धरं चाश्वं यन्त्रिणं च क्रमा[ त् ]न्यसेत् ॥ ९० ॥

त्यक्त्वाद्यपङ्क्तौ कोष्ठे द्वे गजं पार्श्वस्थ नागवत् ।
न्यसेत्तदग्रे कोष्ठानां त्रयं त्यक्त्वा रथं न्यसेत् ॥ ९१ ॥

अयं प्रतिष्ठाव्यूहः स्यात्सुप्रतिष्ठश्च कथ्यते ।
सीमान्ते पृष्ठपङ्क्तौ च प्रतिष्ठाव्यूहसंस्थितिः ॥ ९२ ॥

युवराजस्य वामे स्याच्छाक्तिकश्चर्मसंयुतः ।
सेनापतेर्मन्त्रिणश्च दक्षिणेऽश्वौ तयोस्तथा ॥ ९३ ॥

दक्षिणे धन्विनौ स्यातां स्वामिमन्त्र्यश्वधन्विता[ना]म् ।
पृष्ठतः स्युर्यन्त्रिणोऽश्च धन्विपृष्ठस्य यन्त्रिणोः ॥ ९४ ॥

पश्चाद्रथद्वयं दद्यात्तयोः पश्चाद्गजद्वयम् ।
वासयेद्वाहिनीनाथं सुप्रतिष्ठः प्रकीर्तितः ॥ ९५ ॥

क्रीडासनाद्बहिः स्थाप्याः क्रीडकैर्वाद्यकारिणः ।
सर्वव्यूहेषु तेषां च स्थानमेवं प्रकल्पयेत् ॥ ९६ ॥

सीमादिपङ्क्तेर्बाह्ये च निकटे मध्यकोष्ठयोः ।
दक्षे वारणमेकं च वाजिनं वामतो न्यसेत् ॥ ९७ ॥

कोणयोः पत्तिमेकैकं स्थापयेच्छत्रुसंमुखम् ।
विन्यासं वाद्यकाराणामेवं विद्याद्दलद्वये ॥ ९८ ॥

प्रतिष्ठे सुप्रतिष्ठे तु यथाशोभं प्रविन्यसेत् ।
प्रतिव्यूहं समाश्रित्य तुल्यव्यूहमथापि वा ॥ ९९ ॥

कुर्वीत क्रीडकः क्रीडां युद्धवत्क्रीडनं यतः ।
कोष्ठं स्वस्याश्रयं त्यक्त्वा गन्तव्ये कोष्ठमुच्यते ॥ १०० ॥

पदं तच्च विदित्वैव क्रीडां कुर्यात्तदुच्यते ।
स्वस्थानादग्रतः सर्वकोणे पृष्ठे च पार्श्वयोः ।
भवेदिच्छानुसारेण पदमव्याहतं प्रभोः ॥ १०१ ॥

यथा संभवमिच्छातः [पदं] सर्वासु दिक्षु च ।
पदानि युवराजस्य मन्त्रिणो वाहिनीपतेः ॥ १०२ ॥

दन्तिनामग्रकोष्ठेषु गतिरिच्छानुरूपतः ।
पदैकैकं भवेदेषां सर्वकोणेषु पृष्ठतः ॥ १०३ ॥

रथानमग्रतः पृष्ठे पार्श्वयोरुभयोरपि ।
यथासंभवमिच्छातः पदं स्यान्न तु कोणतः ॥ १०४ ॥

षट् षट् पदानि वाहानां चतुर्दिक्षु च तासु च ।
द्वयं द्वयं द्वितीयस्य पदं कोष्ठस्य पार्श्वयोः ॥ १०५ ॥

खड्गिशाक्तिकधानुष्कयन्त्रिणामग्रकोणयोः ।
पृष्ठे च पदमेकैकं प्रभवेत्पुरतः पुनः ॥ १०६ ॥

(पृष्ठे च पदमेकैकं प्रभवेत्पुरतः पुनः ।)
यथासंख्येन विज्ञेयमेकद्वित्रिचतुः पदम् ॥ १०७ ॥

एतेषां पदसंख्यानप्राणग्रहणसाधनम् ।
प्रत्येकसमुदायाभ्यामुत्तमं वक्ष्यतेऽधुना ॥ १०८ ॥

चतुर्णां मध्यकोष्ठानामेकस्मिन्वासयेत्प्रभुम् ।
युवराजं मन्त्रिणं च सेनानाथं हयं रथम् ॥ १०९ ॥

यन्त्रिणं धन्विनं शक्तिधारिणं खड्गधारिणम् ।
उपसीमादिपङ्क्तेश्च मध्यमे लाञ्छिते गजम् ॥ ११० ॥

क्रीडको गणयेत्तस्मात्स्थानादुक्तपदानि तु ।
एकाधिकानि पञ्चाशत्पदानि स्वामिनोर्द्वयोः ॥ १११ ॥

युवराजस्य मन्त्रज्ञवाहिनीनाथयोरपि ।
चत्वारिंशत्पदानि स्युरष्टाभिरधिकानि तु ॥ ११२ ॥

सप्ताधिकानि दश च पदानि करिणस्तथा ।
षड्विंशती रथस्य स्याद्द्वात्रिंशद्वाजिनस्तथा ॥ ११३ ॥

खड्गिशाक्तिकधानुष्कयन्त्रिणां स्युः पदानि तु ।
चतुःपञ्च च षट् च स्यात्सप्त चेति यथाक्रमम् ॥ ११४ ॥

संभूय पदसंख्या च भवेत्पञ्चशतानि च ।
त्र्यधिकाशीतियुक्तानि प्रत्येकं बलयोर्द्वयोः ॥ ११५ ॥

ज्ञात्वा च व्यूहसंस्थानं पदं पादं च रक्षकम् ।
रुद्धत्वंग[चा]वरुद्धत्वं दानरक्षकयोस्तथा ।
बलाबलं तयोस्तद्वदुच्चनीचपदं तथा ॥ ११६ ॥

जयायाद्वैतदानं च क्रीडां कुर्यान्न चान्यथा ।
उक्ते व्यूहपदे सम्यगधुना दानरक्षकौ ॥ ११७ ॥

तद्भेदांश्चापि रुद्धादीन् प्रवक्ष्यामो यथाक्रमम् ।
प्रकृत्यर्थपदार्थचिन्तया प्रतिपाद्यते ॥ ११८ ॥

प्रसिद्धो दानशब्दार्थो लोकक्रीडकयोरपि ।
ल्युटः करणवाचित्वा[त्]दोधातोः खण्डने स्मृतेः ॥ ११९ ॥

दानशब्देन च प्रोक्तं शत्रूणां वधसाधनम् ।
यस्य यावत्पदं स्वीयं तन्मध्ये पतनं भवेत् ॥ १२० ॥

शत्रूणां चेत्तदा दानं पदिनां स्यात्तु तान्प्रति ।
यस्य यावत्पदं स्वीयं तन्मध्ये पतनं भवेत् ॥ १२१ ॥

स्वीयानां चेत्तदा तेषां रक्षकाः पदिनो मताः ।
रक्षकाः केवलाः केचित्केचित्केवलदानिनः ॥ १२२ ॥

रक्षका दानिनश्चापि केचिच्च त्रिविधास्तथा ।
दानं रक्षकता चोभे भवेतां च चतुर्विधे ।
पार्श्वयोः तार्यसं तिरश्चीकुटिलङ्ग्ये(?) ॥ १२३ ॥

संमुखा(खं)र्धे पुर(तस्यात्तु)स्स्यातां पृष्ठे(दृष्टे) सिंहावलोकने(?) ।
संमुखं कुटिलं त्राक्ष यथा सिह्मावलोकनम्(?) ॥ १२४ ॥

पदं यस्य च नाप्नोति शत्रुर्वा स्वीय एव वा ।
पदमध्ये स्थिते तस्मिन्न दानं न च रक्षणम् ॥ १२५ ॥

दानिनो रक्षकाश्चापि सर्वे ते ऋद्धसंज्ञकाः ।
न क्षमन्ते यतस्ते हि हन्तुं वा न च रक्षितुम् ॥ १२६ ॥

एकस्य रक्षकत्वं च द्वयोर्यत्र विभाव्यते ।
तत्रावरुद्धं जानीयात्तत्रैकस्य च रक्षणम् ॥ २२७ ॥

(तं) रक्षेदायतौ येन रक्षितेन महत्फलम् ।
दानवांश्च निहत्यान्यं त्यजेद्यः क्रीडकस्तथा ॥ १२८ ॥

तथैकस्य यदा दानमुभे प्रति तथापि च ।
नोभौ हन्यात्तु किंत्वेकमायत्यां यद्बधाद्गुणाः ।
दानानां रक्षकाणां च भूयसां यत्र संभवः ॥ १२९ ॥

दानरक्षकयोस्तावच्चिन्त्यं तत्र बलाबलम् ।
रक्षकाणां यदा साम्यं भूयस्त्वं वा भवेत्तदा ॥ १३० ॥

न हन्यात्तत्र भूयस्त्वे दानानां वध इष्यते ।
एकश्चेद्रक्षितान्यत्र दानकर्तापि चान्यतः ॥ १३१ ॥

समकालं यदा द्वौ तद्द्वयोर्वा दानकारकौ ।
तत्र रक्ष्यस्य वध्यस्य पदानामुच्चनीचताम् ॥ १३२ ॥

विचार्योच्चपदं रक्षेद्वधाद्वा न तु नीचकम् ।
त्यक्त्वाप्युच्चपदं नीचपदं हन्याच्च कुत्रचित् ॥ १३३ ॥

रक्षेच्च यस्मिन्निहते रक्ष्यन्ते चायतौ गुणाः ।
स्वामिनो निधनार्थं यद्दानमद्वैतनाम तत् ॥ १३४ ॥

तन्निस्तीर्यमनिस्तीर्यमिति द्वेधा भवेत्पुनः ।
परवाहनकाले यज्जातं निस्तीर्यते न यत् ॥ १३५ ॥

निस्तीर्यं चाप्यनिस्तीर्यं यस्त्ववाहनकालकम् ।
अनिस्तीर्यं यच्च भवेत्तज्जयायेति निश्चयः ॥ १३६ ॥

अद्वैतदाने कर्तव्यो यत्नस्तस्मादनिस्तरे ।
शत्रुनाशं स्वरक्षां वा द्वयं वोद्दिश्य वाहनम् ।
शारिकाणां भवेद्यत्तु तत्तु क्रीडनमुच्यते ॥ १३७ ॥

वाहयेत् शारिकास्तत्र स्वरक्षायै वधाय वा ।
शत्रोर्यत्र प्रदानं स्याद्दाने वा स्वस्य रक्षकः ॥ १३८ ॥

स्वाधारकोष्ठादन्यस्मिन्कोष्ठे स्वस्य पदे यदा ।
वासयेत्क्रीडकः शारं तदा तन्न निवर्तयेत् ॥ १३९ ॥

नाशार्थं रक्षणार्थं वा द्वयोर्त्थं वापि वाहनम् ।
साक्षात्परंपराभेदाद्भवेद्द्वेधा तदुच्यते ॥ १४० ॥

किंचिद्वाहनमात्रेण परं हन्ति च रक्षति ।
स्वीयं चोभयमप्याशु कुरुतेऽन्यद्विलंबतः ॥ १४१ ॥

रक्षार्थं वाहनं द्वेधा रक्षितव्यापसारणम् ।
अन्येन वा रक्षकेण रक्षितव्यस्य रक्षणम् ॥ १४२ ॥

वधा[र्थं] वाहनं यच्च तदपि द्विविधं मतम् ।
किञ्चित्स्यादा[दा]नमात्रार्थं रक्षार्थमपि कस्यचित् ॥ १४३ ॥

द्वेधा भवेद् द्वयोर्देशवाहनं च तदुच्यते ।
द्वयं कुर्याच्च किञ्चिच्च किञ्चिदन्यं च रक्षति ।
न वधार्थं न रक्षार्थं न द्वयार्थं च किञ्चन ॥ १४४ ॥

भवेद्वाहनमेतच्च चतुर्थं वाहनं मतम् ।
समदानसमाक्रान्तशारिकाणां च चालने ॥ १४५ ॥

न चेच्छक्तिर्यदा तस्मादनाकांक्षगतेर्गतौ ।
उत्तिष्ठते यदा सैन्यं स्वकीयं परसीमनि ॥ १४६ ॥

वाद्यकारानपि तदा स्वसंभवपदा नयेत् ।
स्वसैन्यभङ्गे गच्छेयुः सेनापा यत्र संस्थितिः[म्] ॥ १४७ ॥

यदि तूर्णं न चायान्ति बन्दीभूता भवन्ति ते ।
स्वसीमादौ स्वसीमान्ते परसीमादिके तथा ॥ १४८ ॥

कोष्ठेऽपि स्वाश्रये सर्वान् वाहयेदन्यदिङ्मुखान् ।
दाने सति वधं कुर्याच्छत्रोस्त(स्य) स्येतरो भवेत् ॥ १४९ ॥

रक्षको रक्षकेऽप्यस्य दाने भूयसि तद्वधः ।
यद्यप्यनेकान्येकत्र दानानि स्युस्तथापि हि ॥ १५० ॥

हन्यादनन्तरेणैव शान्तिमाश्च तु पृष्ठगैः(?) ।
यस्मादावृतमार्गास्ते संमुखस्थैर्गतागतम् ।
शक्नुवन्ति न कर्तुं हि युद्धवत्क्रीडनं यतः ॥ १५१ ॥

अनन्तरा अपि यदा बहवः स्युश्च दानिनः ।
तदा यथेच्छया हन्याद्वीक्ष्यान्तरगतागतम् ॥ १५२ ॥

करेण च कृते दाने रक्षार्थं तत्र योजयेत् ।
रक्षकं रक्षणं कर्तुमशक्तश्चेत्ततो नवेत् ॥ १५३ ॥

यदि नेतुमशक्तस्स्याद्वधं तस्य विनिर्दिशेत् ।
पददोषान्मार्गरोधा[त्] नयनाशक्तिरिष्यते ॥ १५४ ॥

पददोषान्मार्गरोधाद्यदा नेतुं न शक्नुयात् ।
तदापि चिन्तयेद्धर्मानुपायान् हन्यदेशतः ॥ १५५ ॥

स्वकीये निहिते शूरे यथान्यत्र हतो भवेत् ।
परस्य शूरस्तं पातुं गनेऽरौ जीवनं भवेत् ॥ १५६ ॥

बहुभिर्दानिभिस्सार्धं स्वामी चेत्पुरतःस्थितः ।
स्वामिनं हन्तुमायातस्तं निहन्यात्तदन्तरे ॥ १५७ ॥

स्वामिनं हन्तुमायाता बहवो दानिनो यदा ।
स्वामी गन्तुं न शक्नोति मार्गस्यावरणाद्यदा ।
स्वस्यापि वधमिच्छन्तः स्वामिजीवनकांक्षिणः ॥ १५८ ॥

अपि रक्षकसद्भावे परान् हन्युस्तदन्तरे ।
तिष्ठेयुः पुरतो वापि बहुदानेषु स[त्स्व]पि ॥ १५९ ॥

स्वामिनो[ना] निहते स्वस्मिन् स्वामी गच्छेदिति स्थितिः ।
यतश्च सैनिकास्सर्वे स्वामिजीवनजीवनाः ॥ १६० ॥

तस्मात्तदर्थं म्रियेरन् युद्धधर्मोऽप्ययं स्मृतः ।
यथाशक्ति पणः कार्यः क्रीडकाभ्यां परस्परम् ॥ १६१ ॥

क्रीडादौ तं न गृह्णीयात्क्रीडान्ते विजयात्परात्(क्) ।
पणिकं(तु) यद्द्रव्यं स्यात्तच्च तावद्गुणं भवेत् ॥ १६२ ॥

सर्वयोद्धृपदं यावद्गतानामुत्तमं भवेत् ।
क्रीडाया यदि विच्छेदो भवेन्मध्ये तदा पुनः ॥ १६३ ॥

हतयोद्भूपदेनैव [प]णादानं द्वयोर्भवेत् ।
अद्वैतदाने प्राप्ते तु गृह्णीयाद्विजयात्पराक् ।
हतानामहतानां च पदसंख्याकृतं पणम् ॥ १६४ ॥

यत्प्रसादादि[मां] चक्रे धीरगोदावरः कृतिम् ।
श्रीदुर्गाचरणाम्भोजे तस्मिन्नेतां समर्पये ॥ १६५ ॥

इति श्रीमन्महाराजाधिराजगजपतिप्रतापरुद्रदेवस्वहस्तधारितकनककेसरिचतुष्टयावेष्टित-
शातकुम्भमयकुम्भसंभृतमेघाडम्बराभिधानसितातपत्रशोभमानकविपुङ्गव-
पण्डितराजराजगुरुवाजपेययाजिमन्त्रिवरगोदावरमिश्रविरचिते
हरिहरचतुरङ्गे अष्टमः क्रीडापरिच्छेदः ॥

---

भीमस्यापि रणे भ[ङ्गो] मुनेरपि मतिभ्रमः ।
यदि शुद्धमशुद्धं वा मम दोषो न विद्यते ॥

**॥ समाप्तोऽयं ग्रन्थः ॥**